प्रेमाविर्भावपूर्वकं ग्रथितात्रभवतां कंठसमारोपिता भवतु, इत्याशास्महे वयम् । ॐनमो अर्हं सर्वतीर्थंकराणां पादकमलेषु मम नतिः सर्वदास्तु, शारदा बुद्धिवैशद्यं च सर्वदा ददातु ।

इतिश्रीपरमपूज्यदीर्घतपस्विवयोवृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्र-देशोद्धारकपन्यासपदधारिगणिवर्यहिम्मतविमलशिष्यशान्तमूर्तिप्रवर्तकमुनिश्रीशान्ति-विमलविरचिते विमलगच्छाधीशधर्मधुरंधरशास्त्रविशारदसकलसिद्धान्तवाच-स्पतिविश्ववन्दनीयगणिवर्यामृतविमलचरिते दशमं प्रकरणम् ॥



हिम्मतविमलगणिवर्यस्योग्रतपस्वी मुनिराजहंसविमल आसीत् तस्य शिष्यत्रयमस्ति, तस्य प्रथमशिष्यः प्रेमविविमलनामधेयो द्वितीयो न्यायविमलनामा तृतीयो हर्षविमलनामकश्चास्ति। पन्यासपदधारिणो हिम्मतविमलगणिवर्यस्य द्वितीयशिष्यः शान्तिविमलो नाम्नास्ति, तस्यापि विनेयद्वयमस्ति, तत्र प्रथमशिष्यो रत्नविमलाभिधेयो द्वितीयो देवविमलाभिधश्चास्ति। एवं विस्तृतशिष्यवर्गस्य सर्वोऽपि व्यवहारः पन्यासपदवीं धृतवतो हिम्मतविमलगणिवर्यस्याधीनोऽस्ति, सर्वे शिष्याः कथं विनीता भवेयुः कया च पद्धत्याऽऽगमशास्त्रकाव्यन्यायादिशास्त्रेषु प्रवीणाः स्युरिति मनसि सर्वदा तेषां हितं चिन्तयति गुरुः, अत एव शिष्यवर्गीयां सर्वां धुरं स्वयमेक एवोद्वहति, तस्य गणिवर्यस्य प्रकृतिः शान्ता सर्वजनहृदयंगमा व्यवहारकुशला च भवति, सर्वशिष्यवर्गस्यापि प्रियतरप्रभावा चास्ति। अद्य तस्य गणिवर्यस्य सेवायां सदाविरतः शान्तप्रकृतिर्गुरुवचनपथप्रवर्तनशाली शान्तिविमलनामा मुनिरस्ति। गुरुदेवामृतविमलगणिवर्यस्य शरीरं कालधर्मं प्राप्तम्, परं तस्यानुयायिविनेयवर्गोऽपि तस्य गृहिणः सेवकाश्च तस्य गुणवर्णनं कुर्वन्तस्तथा तेन कृतोपकारान् संस्मरन्ति नित्यशः, परं च वहूनि वर्षाणि संजातानि। तथापि ते गुरोर्गुणगणान् मनागपि न विस्मरन्ति। आत्मास्ति मृतिशून्यः प्रेमपात्रं गुरुदेवस्तथा भवतामात्मा यत्र कुत्रापि स्यात्तत्रेयं शिष्येण कृता गुणवर्णनकुसुममाला

कराणां गुणस्तुतिवर्णनस्तवनानि कवित्वख्यापनानि गुर्जररागनिर्मितपद्यानि बहुशश्चकार, जनेषु च धर्मरसमुत्पादयांचकार। अस्मादितराण्यपि धर्मकार्याणि तेनादरपूर्वकं विदधे गणिवर्येण।

इतिश्रीपरमपूज्यदीर्घतपस्विवयोवृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्रदे-
शोद्धारकपन्यासपदधारिगणिवर्यहिम्मतविमलशिष्यशान्तमूर्तिप्रवर्तकमुनिश्रीशान्तिविमलविरचिते
श्रीविमलगच्छाधीशधर्मधुरंधरशास्त्रविशारदसकलसिद्धान्तवाचस्पतिविश्ववन्दनी-
यगणिवर्यामृतविमलचरिते नवमं प्रकरणम् ॥

विक्रमार्कसमयातीतांबुधिद्विनिध्यंकपरिमिते वर्षे गणिवर्यस्य चतुर्मासी पालनपुरनगरे जाता। तत्रत्यजना विमलगच्छीया बहवः सन्ति, तेषामतिप्रार्थनया मुनिस्तत्रैवोवास। तत्र मुनेश्चत्वारो मासा व्यतीतास्तनंतरं गणिवर्यस्य कीर्तिं देशव्यापिनीं श्रुत्वा मरुभूमिस्थितशिरोहीग्रामवास्तव्यहुकमचन्द्रस्यात्मजन्मा नाम्ना हीरचन्द्रस्तत्रोपाश्रयमागच्छत्तत्समये व्याख्यानसमारंभः समजायत, ततो गणिवर्यो व्याख्यानपीठमारुह्य सर्वजनमनोन्धकारनिवारिणीं देशनां सभासमक्षं दत्तवान्, तां देशनां श्रुत्वावसरं विलोक्य हीरचन्द्रः प्रश्नं विदधे "गुरो! बंधमोक्षयोः किं कारणमस्ति, तद्विषयेऽहमज्ञोऽत एव भवन्तं पृच्छामि, तद्वाणीं श्रुत्वा

जना योग्यतया सत्कुर्वन्तिस्म, परं तस्य चित्ते या जैनधर्मप्रवर्तनेच्छा सा संपूर्णा नासीत्। यत्र गणिवर्यो व्यहार्षीत्तत्र धर्मप्रचारमकरोत्। धर्मकार्येषु तथा महाजनवृन्देषु बहुक्लेशवत्सु तेषूपदेशं विधाय मुनिस्तेषां क्लेशान् वारयामास, प्रभूतेषु स्थानेषु धर्मः किं वस्त्वस्तीति जना न जानन्ति, तत्र गणिवर्यो धर्मोपनिषदम् बोधयित्वा जनान् धर्मकार्येषु प्रवर्त्तितवान्। प्रेम चाविर्भावयामास तत्र जैनजैनेतरेष्वपि सोऽमृतविमलगणिवर्यो धर्मकार्याणि कारयामास, स यत्र यत्र चतुर्मासीमकरोत्तत्र तत्र तस्य सुधासमानगिरा कर्षिता लोका जैनजैनेतरा अपि देशनां श्रुत्वा हर्षिता अभवन्। भिन्नभिन्नग्रामेषु पृथक् पृथक् स्वभाववतां जनानां परिचयेन पवित्रविहारेषु जनतादरेषु मुनिवर्यस्यापि बुद्धेः कषारूढत्वं संजातमभूत्। कथं तेभ्यो धर्मोपदेशो दातव्यो कार्याणि कारयितव्यानि चैत्योपाश्रयादिनिर्माणं विधापयितव्यं तेषाममृतकल्पया गिरा तुष्टिः संपादनीया चेति गणिवर्यस्य कर्तव्यमासीत। अस्य गणिवर्यस्यामृतविमलस्य समये यः साधुसमुदाय आसीत् तत्समयेऽयं गणिवर्यः सुशीलः कृतागमाभ्यासस्तेजस्वी प्रतिभावान् मनीषी चाभवत्। स्वस्य जीवनसमये तपस्याधर्मोपदेशोपधानादिव्रतानि चागमव्रतानि वार्षिकतपांसि घटव्रतानि शत्रुंजयनवनवतियात्रादि कारयामास। तेन धर्मोद्योतने स्वजीवनस्य सर्वोऽपि भागो गणिवर्यो दापयति स्म, तथा तीर्थ-

महाराजश्रीअमृतविमलगणिवर्योऽनेकदेशेषु विहारं विधाय तत्र स्थितानभव्यानपि स्वदेशनया धर्मकार्याण्युपदिश्य सुपथमारोहयित्वोपधानतपश्चर्यादि च कारयित्वा स्वजीवनोपयोगिनीमात्मकल्याणभावनां दृढीचकार । परमविद्वान् व्याख्यानवाचस्पतिगुरुवर्यपन्यासपदधारिदयाविमलगणिवर्यस्य पथा प्रचलन्नमृतविमलगणिवर्योऽपि जैनशासनस्योन्नतिं यथाशक्ति विदधे । तस्यामृतविमलस्य पवित्रपदानि यत्र यत्र भूमौ पतितानि तत्र तत्र तस्यामृतकल्पया गिरा जनानां मनांसि धर्मांकुरितानि जज्ञिरे । ततो महाराजस्यान्तिमो निवासः श्रीराजनगर एवाभवत् । तस्य मुनेः शरीरे पक्षाघातनामकरोगः प्रादुरभूत् । तेनान्यत्र गमनशक्त्यभावात् सोपाननामकोपाश्रय एवोवास । तस्मिन् रोगग्रस्तशरीरवानप्यार्तध्यानं नाकरोत् मनागपि । ध्यानं चतुर्विधं रौद्रमार्तं धर्मध्यानं शुक्लध्यानं च । धर्मध्यानेन स्वर्गं लभते, शुक्लेन कैवल्यं प्राप्नोति, रौद्रेण नरकमार्तेन ध्यानेन तिर्यक्त्वं च—इत्यागमवचनानुसरणं कृत्वा किंचिदप्यार्त्तध्यानं नाकार्षीत्। कर्मकलनां विचार्य तपश्चरणमात्मस्मरणं च कृत्वा दिनानि गमयामास । तस्मिन् समये साध्वी जयश्रीः हुकमीश्चन्द्रश्च काचवलयविक्रेता छोटालालश्च सार्थवाहशृङ्खलचन्द्रादयो गृहस्था अपि सम्यग् वैयावृत्यं चक्रुः । शरीरपक्षाघातोऽपि विंशतिवर्षपर्यन्तमस्थात् तस्य शरीरे । गणिवर्यो यत्र यत्र मासचतुष्टयमवसत्तत्र तत्र

मभूमिर्महद्भाग्यं चास्माकमिति मत्वा ते जनास्तस्मिन् विशेषतो भावं दधुः। अस्य गणिवर्यस्यैतादृशेन प्रभावेणैष महान् तपस्वी देवांशवान् पुरुष इति च विज्ञायते स्म। ग्रामाद्ग्रामान्तरं गंतव्यं मुनिभिर्नैकत्र स्थातव्यमिति वार्ताऽन्यैव, पुनश्च विहारकर्त्तॄणां मुनीनां यत्र ग्रामे विहारः स्यात्तत्र तत्र धार्मिककृत्यानि कर्तव्यानि, धर्मप्रवर्तनं विधातव्यम्, जनताकल्याणाय चित्तप्रवृत्तिः कर्तव्या, सर्वथा लोकस्थितिरपि ज्ञातव्या, शिष्टजनैः सह संस्तवो विधातव्यस्तेभ्यो जनेभ्यो मानप्रतिष्ठा सम्यक् संपादनीया। एतादृशेन नियमेन विहरणं मुनीनां फलदायकमन्येषां च हितकरं भवति, अस्मिञ्जगति बुद्धिवर्धकं च। गुरुवर्यस्यामृतविमलगणिवर्यस्य सर्वेऽपि विहारा एतादृशीं दृष्टिमवलंब्याभवन् इति विज्ञायते तस्य चरित्रैः॥

इतिश्रीपरमपूज्यदीर्घतपस्विवयोवृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्रदेशोद्धारकपन्यासपदधारिगणिवर्यहिम्मतविमलशिष्यशान्तमूर्तिप्रवर्तकमुनिश्रीशान्तिविमलविरचिते
श्रीविमलगच्छाधिपतिधर्मधुरंधरशास्त्रविशारदसकलसिद्धान्तवाचस्पतिविश्ववन्दनीयगणिवर्यामृतविमलचरितेऽष्टमं प्रकरणम्॥

वचसा व्याख्यानं कर्तुमारेभे, ततो व्याख्यानमध्यसमयानन्तरं गुर्जरभाषया कविभिर्निर्मितानि तीर्थकरदेवयशोमिश्रितानि पद्यानि वनितावृन्दो मधुररागेण सदस्यगायतोच्चैस्तत्समये्ऽमृतविमलगणिवर्यो वाचनसमये स्वमुखबद्धां मुहपत्तिं हस्तेकृत्य पुनः पुनः संममर्द, पुनर्व्याख्यानारम्भः समजायत। गुरुवर्यस्यैतां चेष्टां विलोक्य तद्वृत्तांतजिज्ञासुभिः श्रावकैर्व्याख्यानसमाप्त्यनन्तरं पपृच्छे "गुरुदेव! अत्रभवान् मुहपत्तिं पाणौकृत्य कथं मर्दितवान्? तदा तज्जनानां गणिवर्येण प्रश्नप्रतिवचनं ददे—पालितानननगराभ्यर्णे स्थितशत्रुञ्जयपर्वतोपरि भगवत आदिनाथस्य प्रासादे दीपशिखया वितानं ज्वलति स्म, तदग्निं शमयितुं मुहपत्तिर्मया पाणौकृत्य मृदिता, तेन वितानस्थितोऽनलः शान्तः। महाराजस्यैषा वार्ता सत्या किमिति निश्चेतुं जनजिज्ञासा संववृधे, तेषु कतिचिच्छ्रावकास्तन्निर्णेतुं विद्युद्यंत्रमुखेन स्वसंस्तववतो जनानेतं वृत्तान्तं प्रच्छयामासुस्तदा तन्निवासिजनैस्तेनैव यन्त्रेण सूचितम्—अयं सर्वोऽपि वृत्तान्तः सत्य एव कुतोऽस्माभिर्देवाराधकपुरुषाः पृष्टाः तैरुक्तं वायुनिमित्तचलनेन वितानं दीपशिखां पस्पर्श, जज्वाल च, पश्चात् केन कारणेन शान्तोऽनल इति न ज्ञायतेऽस्माभिः। गणिवर्यस्यैतां चमत्कृतिं विलोक्य तत्रत्यजनास्तस्मिन् गुरौ श्रद्धावन्तोऽभवन्। एतादृशवचनसिद्धपुरुषस्य पादन्यासैः पवित्रितास्माकीनग्रा-

प्राप, धारासंपातलक्षणानि सर्वाण्यपि युगपत् संजातानि, विविधनादवती मेघगर्जनाप्यभूत्। तादृशीं स्थितिं विलोक्य जना भयभ्रांतचित्ता अभवन् । तदामृतविमलगणिवर्यो मेघगंभीरया वाचा जनान् सान्त्वयन्नुवाच "भो जनाः ! चित्तभ्रान्ततां परित्यज्य भगवतस्तीर्थंकरदेवस्य वरयात्रां निर्भयाः प्रसारयन्तु भवंतः । एषा वरयात्रा सर्वनगरं भ्रमित्वा स्वस्थानं नागमिष्यति तावन्मेघस्य पृषतोऽपि न पतिष्यति", गुरोरेतादृशानि प्रतापजनकानि वचांसि श्रुत्वा कतिपयानां जनानां मनःसु श्रद्धा पदं न दधौ, भविष्यद्धारासंपातानां सर्वाणि चिन्हानि खगतानि स्पष्टतया लुलोकिरे, विद्युल्लतापि श्यामलितमाकाशं दीप्तिमच्चक्रे, भयोत्पादका घनस्वना अपि समजायन्त । एवमंबुदपातसमयेऽभ्यर्णे समागतेऽपि केचन गुरुवचनभाविकश्रावकास्तस्मिन् श्रद्धामभिसंधाय वरयात्रार्थं विचित्रवादित्रनादपूर्वकं निर्जग्मुरुपाश्रयात् । राजनगरस्य सर्वा अपि मुख्याः प्रतोलीर्वरयात्रां भ्रामयित्वा पुनः प्रत्यावर्तन्त जनास्तावद्गुरुवचनादेव मेघस्यैकोऽपि पृषतो नापतत् । श्रावकजनताश्चर्यवती संजाता गुरोर्वचनसिद्धिं प्रत्यक्षामवलोक्याधिकं श्रद्धावती समभवत्। वरयात्रासमागतजना यावत्स्वगृहं न प्राप्तास्तावन्मेघवृष्टिः समभूत्। यदा गुरुवर्यस्य चतुर्मासी उंझानाम्नि ग्राम आसीत् तदा तत्पुरनिवासिभिर्जनव्रजैरुपाश्रयः संकीर्णोऽभवत्, महाराजो व्याख्यानपीठमाश्रित्य

मास, स्वस्यामृतकल्पया गिरा जनानां भवभवतापोशमनं विदधे गणिवर्यः ततो विहृत्य स तारंगतीर्थं जगाम, यत्र पर्वतोपरि परमार्हतश्रीमद्गुर्जरनरेशकुमारपालेन पारलौकिकीमुन्नतिं विधातुं धनव्ययेनाजितनाथभगवतस्तीर्थंकरस्य भव्यः प्रासादो व्यरचि, यं विलोक्य जनाः स्वजनुषः साफल्यं मन्वते। तत्र प्रतिष्ठापितभगवतस्तीर्थंकरस्याजितनाथस्य दर्शनं कृत्वा सशिष्यो मुनिः संजहर्ष। अत्र गणिवर्यस्यागमनं श्रुत्वा राजनगरीया श्रावकजना राजनगरगमनाय मुनिं प्रार्थयांचक्रुः। ततस्तारंगपर्वतान्मुनी राजनगरं समाययौ, श्रावकैः सह तत्रागत्य गणिवर्यः सोपाननामकोपाश्रयं गतवान्, तत्रैव च मासचतुष्टयमुवास। तदा स गणिवर्यश्चिंतितवान्—क्लिष्टेभ्योऽपि क्लिष्टतमानि कर्माणि क्षपयितुं तप एव परमःपन्थाः॥ प्रभुमहावीरसमास्तीर्थंकरा अपि क्लिष्टकर्मनिबर्हणाय तपसामेव मुख्यत्वं मेनिरे, तीर्थंकरपदं प्रापुश्च, तथैवास्माभिरपि तपांसि संसाध्य क्लिष्टकर्मशमनं कृत्वा सिद्धिपदं प्राप्तव्यमिति विवेकं चकार। एवं विचार्य गणिवर्येणापि मासक्षपणं चक्रे, एतत्तपोऽनन्तरं राजनगरीयश्रावकजनता तत्तपस उद्यापनायाष्टाहिकामहोत्सवो महता द्रव्यव्ययेन कृतवती, तदोद्यापनविधिप्रदर्शिनीं महतीं वरयात्रां निर्गमयितुं जनमनःसु प्रवृत्तिः संजाता, तत्समये समग्रमप्याकाशं मेघान्तरितमभूत्। तदा चपलापि तां वरयात्रां निरीक्षितुं प्रवृत्तेव पुनःपुनर्जनदृग्गोचरतां

सपूर्णिमावधि तत्र स्थित्वा ततो विजहार च वलभीपुरं समागतवान्। अत्र पुरे पंचचत्वारिंशदागमान् महामुनयो लिलिखुः। तत्रत्यजना मुन्यागमनसमये वादित्रनादपूर्वकं मुनेः सन्मानं कृत्वा स्वग्रामं प्रति प्रवेशयामासुरुपाश्रयं गत्वा तन्निमित्ता बहुशः प्रभावनाश्चक्रुश्चान्नजलादिना सशिष्यं मुनिं सत्कृतवन्तश्च, तेन मुनिनाऽत्र चतुर्मासी कृता, नागरान् श्रावकान् षड्व्रतं पञ्चचत्वारिंशदागमव्रतं कारयित्वा धर्मोन्नतिश्चक्रे, ततो नागरा विहरणतत्परं गणिवरं विज्ञाय पुनरत्रैव चतुर्मासीं कर्तुं बहुशः प्रार्थनां चक्रुः। परं चामृतविमलगणिवर्यस्य सर्वप्रदेशेषु जैनधर्मप्रवृत्तिकर्तृत्वं प्रियतरमभवत, साधुजनैरेकत्र स्थले न वस्तव्यमिति मत्वा च पौरान् सान्त्वयित्वा धर्मप्रवर्तनाय ततश्चचाल मुनिः। वलभीपुराद् विहृत्य मेवाडमालवादिदेशजिगमिषा समजायत, ततःप्रथमं रतलामनामकं ग्रामं मुनिः प्रतीयाय। तत आदिनाथस्य तीर्थस्थलं नाम्ना केसरियाजीति प्रसिद्धं वर्तते, तत्रादिनाथस्य जगदन्धतमसनिवारिणीं श्यामलां मूर्त्तिं निरीक्ष्य बहुशो वन्दनं कृत्वा स्वात्मानं पवित्रीचकार, मेवाडदेशेऽपि कतिचित्समा विजहार मुनिः। ततो गुर्जरप्रजानां विनयं विलोक्याणहिलपत्तनादिग्रामेषु विहरन् विशनगरं समागत्य तत्रत्यजनताविनतिमादृत्य चतुर्मासीं तत्रैवोवास, तत्राप्युपधानादितपांसि व्रतविशेषांश्च जनान् कारया-

तथास्मिन्नुपधानतपसि प्रविष्टजनानां समाज एतादृशगुरूपासनया सूत्रमर्यादारहस्यतपश्चर्यारूपसाधनानि ज्ञात्वा जनुषां कृतार्थतां मेने। पालनपुरग्राम एतां चतुर्मासीं कृत्वा निखिलगुर्जरभूमिं पावयित्वा जनचित्तेषु धर्मबीजानि रोपयन् कतिचिद्वर्षाणि तत्र विजहार। ततः शौर्यवतां धर्मात्मनां च पादरजोभिः पवित्रितां सौराष्ट्रभूमिं समगच्छत्। अस्मिन् समये तत्र प्रसृतं ढुंढकमतं विलोक्य तन्मतदृढाज्ञानाननादितीर्थंकरप्रतिपादितधर्मशासनसमालोचनया सत्पथं दर्शयित्वा पुनर्मूर्तिपूजनप्रकारे समतिष्ठिपद् गणिवर्योऽमृतविमलः। एवं गणिवर्योपदेशेन ढुंढकमतं विहाय मुनेः सुधासमानवाणीं श्रुत्वा जैनधर्ममङ्गीचक्रुर्जनास्तदनंतरं यस्याः क्षितेः प्रभावात् कौटिल्यप्रकृतिमन्तःपापिनोऽपि जनाश्चंद्रशेखरादयोऽपि स्वजीवनपरिवर्तनं विधाय शुद्धाः संजाताः, यत्र परमभव्यजनसंतारका आदिनाथादयस्तीर्थंकरादयश्च कोटिशो मुनयोऽपि प्रभूतवर्षाणि तपांसि कृत्वात्मोन्नतिं साधयामासुस्तत्र भूमौ शत्रुंजयगिरिराजतीर्थस्य यात्रार्थं गणिवर्योऽगच्छत्। अत्र शत्रुञ्जये स नवनवतिकृत्वो यात्रां विधाय तीर्थंकरभगवतां पुनःपुनर्दर्शनं कृत्वा स्वात्मानं विशेषतो निर्मलीचकार। अत्र चतुर्मास्यवधिमागतं विज्ञायान्यत्र गमनसमयोऽद्य नास्तीति मत्वा तत्र तीर्थ एव चतुर्मासीं न्यवसत्। तत्र पालितानगरेऽष्टाहिकमहोत्सवशान्तिस्नात्रादिधर्मकार्याण्यनेकशःकारयित्वा धर्मोद्योतं मुनिश्चकार। अन्ततः कार्तिकमा-

ग्रामे प्रतिगृहमानन्द उल्ललास, तथा शान्तिस्नात्रादिकार्येभ्यः शासनशोभा समजायत जनेषु। अथ गणिपदप्राप्त्यनन्तरं गणिपदोपाधिधारिणा मुनिनामृतविमलगुरुणा मरुभूमिगतपवित्रतीर्थसेवनाभिलाषेण देवदिदृक्षया च पन्यासपदधारिश्रीहेतविजयमुनेराज्ञां प्राप्य घाणेरावपुरादन्यत्र विजह्रे। एवं मरुभूमौ कंचिदनेहसं विहृत्य पवित्रतीर्थानां दर्शनं च कृत्वात्मानं पवित्रीचकार गणिवर्यः। तत्र तत्र प्राचीनार्वाचीनभूमिगतपर्यावर्तनं विलोक्य तथा सर्वेषां वस्तूनां क्षणभंगुरतां भावयन् तीव्रसंवेगवान् समजायत। एवममृतविमलगुरुं मरुभूमिं विहरन्तं गणिवर्यं पालनपुरवास्तव्यजना आदरपूर्वकं विनीतवन्तस्तदाग्रहान् मुनिवर्यस्तं ग्राममियाय, तत्र मासचतुष्टयमपि न्यवसत। यत्र ग्रामे जैनशासनप्रभावकौ गणिवर्यावनेकचैत्यालयकर्तॄणां मुख्यौ श्रावकोत्तमौ वस्तुपालतेजपालनामानौ प्रादुरभूताम्। यदा गणिवर्यो जगाम तं ग्रामं तदा तत्रत्यजना वादित्रघोषपूर्वकं पुरप्रवेशमहं कृत्वोपाश्रयं गतवन्तो मुनिं लाभयित्वा सत्कारं चक्रुः। तत्र बहूनि धर्मकार्याणि शासनोन्नतिप्रदर्शकानि कारयामास जनान्। अत्र गणिवर्यं उपधानतपसामारंभं कारयति स्म। तत्र राजनगरवटनगरमहीसाननगरादिवासिनो जनाः संयुयुजुः। यथा प्रशस्यगुरूपासनबलेनानेकमंत्रतंत्रविद्यासाधकोऽनेकमर्यादारहस्यसाधनानि संशिक्ष्य विद्याविच्छिष्यो कृतकृत्यो भवति तथाऽऽनन्दितश्च भवति,

श्चिदपि स्थानेऽनाकलितं न भवतीति। भवादृशाः समताजुषो जना आत्मसंस्मरणलीना भवन्ति, परं चात्र सहस्थितत्वेन भवतां स्वभावो मया पर्यालोचितस्तेन मम तुभ्यं गणिपददित्सा संजायतेऽतोऽस्य ग्रामस्य जनसंमतिं गृहीत्वा तुभ्यं गणिपदं दास्य इति मेऽभिप्रायोऽस्ति। एवं परस्परं वार्तयित्वा घाणेरावसंघ-समस्तं समाहूय तमपृच्छत्—अद्य भवतां गृहांगणे महापंडित आगमवेत्ता पंचमहाव्रतधारी भवतः सर्वान् पावयितुमागतोऽस्ति, तस्य वैदुष्यं तादृशांश्च गुणान् समवलोक्याहं परितुष्टो मम तस्य गणिपददित्सा वर्तते, भवतां कीदृशी रुचिरस्तीति मह्यं विज्ञापयन्तु। तदा संघसमस्तजनैरुदीरितं यथा तत्रभवतामिच्छा तथा कर्तुं वयं सर्वे तत्पराः स्मः। अस्माकं गृहांगण आगत एतादृशः समयो वन्ध्यो माभूत्। अतो यथा भवतामाज्ञा तथा यतिष्यामहे। तस्य ग्रामस्य संघसमस्तस्यामृतकल्पानि वचांसि श्रुत्वा पन्यासः संजहर्ष, सद्य एव संघजनानष्टाहिकमहं कर्तुमादिदेश। महाराजस्याज्ञां प्राप्य तत्र जनैरुत्सवः समारेभे, तन्निर्मित आनन्दः सर्वत्र ग्रामे प्रतिगृहं प्रससार, अमृतविमलस्य गणिपदमहोत्सवे श्रीनगरात् संघवीत्युपाधिधारी श्रेष्ठिशृङ्खलचन्द्रस्तथा जोइतारामनामा श्रेष्ठी तथान्ये च संघजना अपि सूर्यमलश्रेष्ठ्यादयोऽप्यामंत्रिता गृहस्थाः समागच्छन् घाणेरावपुरम्। एवं सकलसंघजनसमक्षं शुभे मुहूर्ते मुनिराजामृतविमलाय गणिपदवी प्रदत्ता तदा तत्र

वकाःस्वद्वादशव्रतपालने दृढव्रता बभूवुः। प्रत्याख्यानसामायकादिधर्मकार्येषु प्रेम्णा संयुयुजुः। इत्येवं तेषां मनसि धर्मबीजानि रोपयन् मुनिः सर्वत्र विजहार। सर्वजनीनहितसमावेश आत्मनीनहितं समाविशतीति मत्वा सर्वजनकल्याणप्रवर्तन एव स्वमनीषोपयोगं ददौ मुनिवर्यः। महाराजामृतविमलगुरोः परिचयवन्तो जना जातुचिदपि तं न विस्मरन्ति। तस्य स्वभावसौष्ठवतया संमीलनस्वभावतया च जनास्तस्मिन् स्निह्यन्ति स्मेत्थमनेकग्रामेषु विहरन् गुरुरमृतविमलोऽनेकतीर्थदेवालयादिभिः पवित्रितं मरुभूमिस्थितं घाणेरावग्रामं प्राप्तवान्। तत्समये तस्मिन् ग्रामे पन्यासपदधारी साधुशुद्धव्रतपालनतत्परो गणिवर्यो देशनादानैर्जनानां जननमरणक्लेशं वारयन् हेतविजयमुनिर्विरराज। तं समागतं विज्ञाय गणिवर्यो बहुशस्तुतोष, सानन्दं स्वसन्निधौ चतुर्मासीं कर्तुमाग्रहं च कृतवान्, तस्य तदाग्रहं विज्ञाय मुनिवर्योऽप्येतादृशमहापुरुषपरिचये लाभः संजायते प्रेमाविर्भावोऽपि परस्परं संजायत इति विचार्य तेन गणिवर्येण सह तत्रैव चतुर्मासीं विधातुं निश्चिकाय। तत्रान्योन्यपरिचयेन पन्यासपदवीधारी हेतविमलगणिवर्योऽपि चामृतविमलमुनेर्विवेकनम्रतासहिष्णुतादिगुणवर्गेण गुणगृह्यत्वं चावलोक्य सोऽतीव तुतोष तस्मिन् मुनौ, तस्य योगोद्वहनादिधर्मकार्याणि कारयित्वा सूचितवानेव गणिवर्यो गुणिजनानां गुणप्रसूनसौरभ्यमत्र जगति कस्मि-

इतिश्रीपरमपूज्यदीर्घतपस्विवृयोवृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्रदेशोद्धारकपन्यासपदधारिगणिवर्यहिंमतविमलशिष्यशान्तमूर्तिप्रवर्तकमुनिश्रीशान्तिविमलविरचिते श्रीविमलगच्छाधिपतिधर्मधुरंधरशास्त्रविशारदसकलसिद्धान्तवाचस्पतिविश्ववन्दनीयगणिवर्यामृतविमलचरिते सप्तमं प्रकरणम् ॥

अस्मिञ् जगति मुनिविहारो मुनिजनानां ज्ञानबाहुल्याय भवति, यथा जलप्रवाहो नैर्मल्यं प्राप्नोति प्रवाहरूपेण स्वयमन्यांश्च निर्मलान् करोति तथा विहरणशीला मुनयो ज्ञानोपदेशेन जनमनसां नैर्मल्यमातन्वन्ति। महाराजश्रीअमृतविमलस्य विहारेण तस्य विद्यासंस्कारेषु प्राबल्यता समजनि। एवं राजनगरे जनताग्रहात्त्रिचतुर्मासी क्रमशो व्यतीयाय, ततो गुरू राजनगराच्चतुर्मास्यनन्तरं शुभे मुहूर्तेऽन्यजन्यपदविविरहणाय प्रचचाल। प्रथमं ततो निर्गत्य पाटणनगरे चतुर्मासीं व्यधात्, ततो विशनगरे, ततः पालनपुरे, ततो ग्रामाद् ग्रामं विहरतस्तत्र जनानां सुधासमानदेशनया शान्तिं विदधत् सर्वत्र विजहार मुनिः, सर्वत्र जनानां जैनधर्मोपनिषदमुपदिदेश, जनमनःसु धर्मस्थापनां च कारयामास। यत्र यत्र महाराजो विजहार तत्र तत्र तस्य कीर्तिं श्रुत्वा जना वृन्दशो भूत्वा तस्य देशनां श्रोतुं समाजग्मुर्गुरोर्मधुरवाणीं च श्रुत्वा श्रा-

तव्यं तेषामुपनिषदपि सम्यक्तया ज्ञातव्या, इति मत्वा शास्त्रतलस्पर्श्यभ्यासवान् समजायत । प्रत्यहं स शास्त्राभ्यासस्याग्रपथं ददौ, कथं जगति लोककल्याणायात्मनो शिवलक्ष्मीवरणाय च तेनाग्रे गंतव्यमासीत्। स मुनिः स्वाध्यायबलेन जगता निर्धारितमुच्चपदं प्राप्तः । विद्वज्जैनाचार्यनिर्मितग्रन्थानां तथा तथोत्तमपुस्तकानां परिचयोऽवश्यं कर्तव्य इति महाराजामृतविमलस्य मुनेः प्रशंसनीया पद्धतिरभवत । एवं दीक्षाग्रहणानन्तरं तत्र श्रीनगर एव वर्षत्रयं समतीतम्, तदा तस्य विचारशैली पूर्णतां प्राप्ता स्वाध्यायोऽपि प्रबलो जातस्तस्य ज्ञानदृष्टिरपि शास्त्रार्णवागाधतलस्पर्शितां प्राप, तर्कशक्तौ सत्यशोधनसमालोचनाप्यपूर्वासीत् । अस्मिञ् जगति साधनसंपन्ना जना यद्युत्साहवन्तः स्युस्तर्हि किं किं न कुर्वन्ति ? जनोऽयं जगति पांचभौतिककार्येषु चान्तरिकमनोविज्ञानशक्तिषु यादृग् विवर्धिषावाञ् जायते तादृशः संवर्धते निःसंशयम्। तस्यैवामृतविमलस्य मुनेः स्वाध्यायो यथा यथा समवर्धत तथा तथा तस्य कीर्तिरपि सर्वजनपदे विस्तृतासीत् । यत्र यत्र जनव्रजैः प्रार्थितश्चतुर्मासीं न्यवसत् तत्र तत्र तस्य विद्वत्ता यौवनतां प्राप । श्राविकाश्रावकवृन्दस्तस्य वचनमाधुर्यमयीं व्याख्यां श्रुत्वा स्वजन्मावन्ध्यतां मत्वा स्वात्मानं च धन्यं मेने ॥

जानीयुरेताद्दशेन गुरूपदेशेन सिद्धितपसो महान् महो जनैः समकारि, यस्योत्सवस्य व्यवस्थां श्रेष्ठी हुकमीचन्द्रो जोइतारामश्चाकुरुताम्। एवं त्रिवर्षमध्ये त्रिचतुर्मासीं व्यदधान्मुनिः, तेषु मध्ये श्रीराजनगरेऽनेकधर्मकार्याणि जनैः कारितवान्। तत्समये मुनिश्रीअमृतविमलस्य शास्त्राध्ययनशैलीं चागमानां चाभ्यासं विलोक्य तदानींतना जना मुमुदिरे, राजनगरीयसर्वप्रजा आगमोक्तवचनोपदेशेन धर्मसन्नाहवत्योऽभुवन्। इतो गणिवर्यस्य शब्दघोषमयी देशना प्रवर्ततेऽतोऽमृतविमलमुनेरभ्यासः संपूर्णतां प्राप्तः। अस्मिञ्जगति महान्ति प्रश्नप्रतिवचनानि प्रदातुं विद्यापीठेषु तथान्यासु पाठशालासु परीक्षा निष्णाततावश्यकी नास्ति, कथं जनानां प्रश्नप्रतिवचनशक्तिर्न परीक्षातो भवति, किंतु ग्रन्थतलस्पर्श्यभ्यसनादेव जायते। निर्मितपाठ्यपुस्तकेषु निर्धारितपुस्तकस्येयत्प्रमाणं वाचनं कृत्वा परीक्षोत्तीर्णानामध्ययनरीतिर्न सत्या, कथं शास्त्रमर्यादया कस्यापि विषयस्य तलस्पर्श्यध्ययनमन्तरा जनाः शास्त्राणां पारंगमिनः प्रश्नप्रतिवचनदानसमर्था न जायन्ते। अस्मिन् समये मुनिश्रीअमृतविमलस्य बुद्धिरेताद्दशी कुशाग्रीयाऽभवद्यथा प्रश्नप्रतिवचनदानसमर्था जाता। अन्यच्च स यं यं विषयमंगीचकार तस्मिन् निष्णातो बभूव। स्वस्य स्वाध्यायार्थं विपुलानि साधनानि संरक्षणीयान्येवं तस्याकूतमभूत्। गणधरनिर्मितागमाभ्यासे पूर्णतया यति-

र्मासीं नावसत् परंतु शाहपुरनिवासिसंघजनैरादरपूर्वकं कृतां विनतिं श्रुत्वान्यमासचतुष्टयं श्रीनगरस्थित-शाहपुरे मंगलश्रेष्ठिपाटकेऽकरोत्, तत्रापि चतुर्मासाभ्यन्तरे तत्रत्यजनान् सूक्ष्माणामपि तत्त्वानां निरूपकाणां ज्ञानपूर्णतादर्शकानां च महापुरुषाणां शासनाग्रयतासम्पादकानां पंचचत्वारिंशदागमानां व्रतं कारयित्वा "जनैर्ज्ञाने कीदृगादरः कर्तव्य" इतिज्ञानमाहात्म्यं सम्यग् दर्शयित्वा तपश्चर्याप्रभावमपि सम्यक् संश्राव्य धर्मसूर्योद्योतेन जनमनःकमलान्युद्‌घाटयामासिवान्। तृतीयां चतुर्मासीमपि तत्र श्रीनगर एव सोपाना-श्रयनामकोपाश्रये तत्रपाटके पाटकजनाग्रहात् सशिष्यो मुनिरकरोत्। तस्य गणिवर्यस्य वाणीप्रवाह एता-दृशोऽभवत् तत्रत्यजना मुनौ स्नेहला बभूवुस्तस्य ज्ञानागाधतां व्याख्यानपद्धतिं चालौकिकीं विज्ञाय सर्वे मोहिताः संजाताः। अत्रत्यचतुर्मास्यां तत्रत्यजनान् सिद्धितपसः प्रभावं ज्ञापयित्वा सिद्धितपोऽचीकरत्। अस्मिन् सिद्धितपसि पंचशतं जनानां समुदितमभूत्। तेषामग्रे तत्तपसो महिमानं व्याचख्यौ। अस्मिन् जगति महालब्धयः प्रोन्नताः शक्तयश्च पूर्वाचार्यैर्महाप्रयत्नैः संपादिताः सन्ति तपोबलात्, यतो जनैर्यथा-शक्ति सिद्धितपसि यतितव्यं, तथैवैतानि तपांसि शास्त्रोक्तविधिना सौष्ठवेन साधर्मिकवात्सल्येन धर्मवत्स-लतया चोद्यापनीयानि, यामुद्यापनां दृष्ट्वा जना ज्ञानाय प्रवर्तेरन् तथैवाचरणमपि कुर्युस्तपोमहिमानमपि

यथाकरोद्भूतमणीनां परीक्षा सत्यमणिकार एव करोति शाणघर्षणादिना तथेमौ द्वावपि मुनिवेशसंस्थितावनगारव्रतशाणोत्तेजितौ सत्यसाधुपदधारिपन्यासपदविभूषितस्य श्रीदयाविमलगणिवर्यस्य सन्निधौ विनयविवेकवैराग्यशान्तिनिरवधिदयादाक्षिण्यादिगुणवृन्देन शुशुभाते। ततस्तावुपगुरुवर्यमध्ययनमारभेताम्। आदौ व्याकरणकाव्यकोशसाहित्यन्यायादिशास्त्राणामवलोकनं स्वबुद्धिप्रागल्भ्येन चक्रतुस्ततो मागधीभाषया गणधरैर्विरचितान् पंचचत्वारिंशदागमानपि सौष्ठवतया विशदान् मनसि धारयामासतुर्येषु साक्षाज्जैनमतं निरूपितं नवतत्त्वदर्शनं भवति लौकिकपदार्थानां दर्पणेष्विव। मुनिश्रीअमृतविमलमहाराजस्तद्बन्धुः सुमतिविमलोऽपि चतुर्मासत्रयं पन्यासपदधारिगणिवर्यदयाविमलैः सहैव श्रीनगरे चक्रतुः। प्रथमं मासचतुष्टयं हाजापटेलेतिप्रसिद्धनामके पाटके स्थितस्य सोपाननामकोपाश्रयस्य मध्ये चक्रतुः। तत्र गुरुप्रभावतश्चतुर्मास्यां सर्वजना व्रतधर्मपालनतत्परा बभूवुः। दयाविमलगुरोर्वचनपयःप्रवाहेण जनचित्तालवालेषु क्लिन्नेषूप्तानि धर्मबीजान्यंकुरितानि संजातानि, पश्चात्स्वर्गमोक्षफलदान्यपि समजायन्त, तथान्ये जना गणिवर्यस्य वचनेन प्राप्तसम्यक्त्वाः स्वीकृतश्रावकद्वादशव्रताः प्रत्यहं व्याख्यानसमये तच्छ्रवणेन च कृतमुनिबहुमाना भक्तिमन्तो बभूवुस्ततोऽन्यचतुर्मासस्थित्यर्थं तत्रत्यजनैर्महाग्रहपूर्वकं विनीताऽपि मुनिवर्यस्तत्र चतु-

समजायत । संसारतापोपशमनीं गुरुच्छत्रच्छायामाश्रित्य द्वयोर्मुनिराजयोर्जीवनदशा क्वाप्यवर्णनीया संबभूव, पन्यासपदधारी दयाविमलगणिवर्योऽपि योग्यशिष्यतासंपादनदक्षौ गुरुपरिचर्याकुशलौ विद्यासंपादननिपुणौ शासनप्रभावकौ द्वौ शिष्यौ समजायेतां तेनाप्यात्मानं धन्यं मेने। अस्मिञ्जगति दैवं किमातनोतीति न केनापि ज्ञायते ज्ञास्यते वा, कथमिन्द्रप्रस्थवास्तव्यस्य धनिकव्यवहारिणः पुत्रस्य चारित्रलक्ष्मीवरणं जनहितकरणं च क्व लोलुपतासक्तजनैर्वर्णितं गार्हस्थ्यसुखं च क्व, अनयोरंतरं निर्धार्य तेन सर्वधनिकवैभवं च परित्यज्य संसारसमुद्रतारिणी नौकासमा दीक्षा यद्गृहीता सैषा न स्वल्पा वार्ता, किंत्वतिमहज्जनचरितमीदृगेवास्ति । अस्मिञ्जगति दीक्षागृहीतारो जना मतिभेदेन बहवः सन्ति परममरचन्द्रवद्धनिकवैभवं त्यक्त्वा मायां च पदाहत्य चारित्र्यलक्ष्मीं वरयितारः शासने विरलाः सन्ति ॥

इतिश्रीपरमपूज्यदीर्घतपस्विवयोवृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्रदेशोद्धारकपन्यासपदधारिगणिवर्यहिम्मतविमलशिष्यशान्तमूर्तिप्रवर्तकमुनिश्रीशान्तिविमलविरचिते श्रीविमलगच्छाधिपतिधर्मधुरंधरशास्त्रविशारदसकलसिद्धान्तवाचस्पतिविश्ववन्दनीयगणिवर्यामृतविमलचरिते षष्ठं प्रकरणं समाप्तम् ॥

महती प्रतिष्ठाऽऽसीत् । तस्य पीयूषवर्षिणीं संसारतापोपशमनीं भव्यजनोद्बोधनदक्षां गिरं श्रुत्वा तत्स्था बहवो जना गणिवर्ये प्रेमाविर्भावमातेनिरे । एकस्मिन् समये गणिवर्यो जनसदसि जनशान्तिकर्तृ व्याख्यानमुपाश्रयमध्ये चकार, तच्छ्रवणाय बहवः पौरजनाः संमिलितास्तद्व्याख्यानं यदा समाप्तिमगच्छत्तदा निखिलाः श्रोतारो जनाः क्रमशो विशीर्णा बभूवुः। केवलममरचन्द्रः स्वभ्रात्रा सह तत्र निषण्णोऽभवत्। सर्वजनविशीर्णनानन्तरं तौ द्वौ भ्रातरावेव गणिवर्यस्य दृष्टिपथं गतौ । तौ दृष्ट्वा तयोः शुभसंकल्पं दृढवैराग्यं चाकलय्य सर्ववस्तुनिःस्पृहो गुरुः "अस्ति किंचित्कार्य" मित्यपृच्छत् । तदा तत्प्रतिवचनेऽमरचन्द्र ऊचे-तत्र भवतां पीयूषवर्षिण्या वाचया चरितेन चावयोर्मनः परमं संतोषं प्राप्तम् . तत्रभवतो दीक्षाग्रहणलालसा नौ वर्ततेऽतो भवमोचिनीं दीक्षां देहीति तस्यामृतकल्पानि वचांसि श्रुत्वा गुरुस्तयोर्दृढतां परीक्ष्य सर्वसंघस्य संमतिं गृहीत्वा शुभं मुहूर्तदिवसमवलोक्याष्टाहिकामहं कारयित्वोत्सवान्ते विक्रमसमयातीतवस्वेकनिध्यंकमिते वर्षे मार्गशीर्षमासे शुद्धे पक्षे तृतीयातिथौ विधिपूर्वकं वादित्रनादपूर्वकं ताभ्यां पारिव्राज्यं विततार गुरुस्तयोर्मध्य एकोऽमरचन्द्रो नाम्नामृतविमलश्चान्यः शकुनराजो नाम्ना सुमतिविमलो बभूवान्ततः स्वशुभभावनायां पूर्णायां योग्यगुरुसंगमने संजाते नवीनमुनेरमृतविमलस्य मनसि महानानन्दः

धितितीर्षया परमगुरूपदेशमयीं धर्मनौकां मृगयितुमागतौ स्वः । तादृशगुरोःसमीपे पारिव्राज्यं गृहीत्वाऽऽत्मोन्नतिकरणाय निजगृहान्निर्गतौ स्वः । इत्येवं प्रश्नप्रतिवचनं ददावमरचन्द्रः, पश्चात् किंचित्कालं तत्र स्थित्वा गुरुवन्दनं कृत्वा स्वभ्रात्रा सह स्वावसथं प्रत्याययौ । गुरुप्रथमदर्शनसमय एवामरचन्द्रस्य गुरूपरि परं प्रेमाविर्बभूव, पश्चाच्छनैर्द्वौ भ्रातरौ गणिवर्यस्य संगतिं विदधतुः । तस्य संसारनिवर्तनकरीं देशनां पुनः पुनः श्रुत्वा तयोर्यथा यथा गणिवर्यस्य संगतिरवर्धत तथा तथा गुरुं प्रति विशेषतः सद्भावना दृढीभूता समजायत । अमरचन्द्रस्य हृदये दीक्षाग्रहणबीजं नवपल्लवितमभूत् । ताभ्यां निश्चितं च यदि दीक्षा स्वीकार्या चेदस्माद्गुरोरेव गृहणीया नान्यस्मात् । एतादृशशान्तमूर्तिसाधुलक्षणसंपन्नादस्माद्गुरोरेवास्माकं परमोद्धारो भविष्यति, अतोऽस्माद् गुरोरेव संसारोच्छेदकरीं दीक्षां स्वीकार्य तस्य चरणकिंकरौ भूत्वा तस्याश्रयच्छायामाश्रित्य शिववर्त्मनि यतितव्यं लोककल्याणमार्गेऽपि च । एवममरचन्द्रः स्वमनसि निश्चिकाय । अथ कोऽसौ दयाविमलगणिरित्याकांक्षायां तस्य पट्टपरंपरां वच्मि—तपोगच्छपरंपरायाः षट्पञ्चाशत्तमे पट्टे स्थितस्यानन्दविमलसूरेः परंपरागतविमलगच्छस्थितपट्टधरः पन्यासपदधारी दयाविमलगणिरभवत्, तत्समये राजनगरश्रेष्ठिषु मुख्यतया गणनां प्राप्तः श्रेष्ठी मनसुखनामापरश्च यमुनाख्यश्च, तौ द्वौ दयाविमलगणेः वशंवदावभूताम् । गणिवर्यस्य तत्समये राजनगरे

रथा उत्थायोत्थायोपशमं गच्छन्तिस्म । अन्ततोऽग्निरथो राजनगरं प्राप्य स्वस्थितिस्थाने स्थिरोऽभूत् । तदा तत्र निषण्णा जना युगपत् खलकपोतन्यायेन स्वस्वस्थानेभ्य उत्तीर्णास्तदा पान्थभारवाहिनः किंकरा वेतनदानेन सर्वपान्थानामध्वनीनोपस्करं सर्वमनलरथस्थितिस्थानाद्बहिर्निष्कासयामासुः । ततः पान्था हयशकटसमुदायैः स्वस्वस्थानं प्रतिजग्मुः । अमरचन्द्रोऽपि शकुनराजेन सह तत्रासन्नविश्रामभुवनं प्राप्य निवासं चकार । परोलक्षपरिपूर्णजनव्रजराजनगरस्य संस्तव उभयोर्भ्रात्रोर्यद्यपि नासीत्तथापि स्वबुद्धिप्राबल्येन तेजस्वितयामरचन्द्रः क्लेशं मनागपि नाप । अथैकस्मिन् दिवसे द्वौ भ्रातरौ नगरे भ्रमन्तौ चैत्यवन्दनं कुर्वन्तौ च राजनगरस्थितदेवशाहश्रेष्ठिनः पाटके स्थितं जैनोपाश्रयं गत्वा तत्र स्थितानां साधूनां वन्दनां चक्रतुः । तस्मिन् समये तत्रोपाश्रये भविजनसंतारकः सर्वागमसंवेदी देशनादानचतुरस्तेजस्वी पन्यासपदधार्यनुयोगाचार्यो नाम्ना दयाविमलगणिवर्यो विरराज । कृपालुर्मुनिवरस्तदानी स्ववन्दनकर्त्रोस्तयोः सुखसमागमपृच्छां विधाय कुतः समागतौ किमर्थं चेत्यादिप्रश्नान् पप्रच्छ, तदा तत्प्रश्नानुसारेणामरचन्द्रोऽपि भाषते स्म गुरो ! अहमिन्द्रप्रस्थवास्तव्योऽस्मि नाम्नामरचन्द्रस्तथाऽयमपि मद्भ्राताभिधानेन शकुनराजोऽस्ति । आवां स्वकर्मणा निम्नोन्नतगतिं गछतां जीवानां परमकष्टदायिचतुर्गतिसंसारोद-

नार्थमनेके जना यथा समूहयन्ति तद्वदत्रापि जनसंमर्दो महता प्रमाणेन विद्यते। धूमशकटस्य तृतीयवर्गस्थानस्य नामधेयमांग्लभाषायां थर्डक्लास इति कथयन्ति जनाः। तत्र स्थाने केचन जनाः स्वस्वपादान् प्रसार्य प्रस्वपन्ति, केचन नर्मकर्मकुशला नर्मवचांस्युच्चाययन्ति, केचिद्द्विपंचाशत्पत्रात्मकं रक्तश्यामलितमंकान्वितं क्रीडनकवस्तु गृहीत्वा परस्परं रमन्ते रात्रिनिर्गमाय, केचन नर्मवचस्यट्टहासेन निद्रितजनानुपप्लवयन्तिस्म। धूमशकटस्य कनिष्ठवर्गस्थानं तु विविधस्वभाववज्जनसमुदायेन जगद्दर्पणमिव प्रतिभाति, नैकजनसमुदायेन येषामानन्दजिघृक्षा चेत्तत्रैव स्थातव्यम्। द्रष्टारोऽपि विविधस्वभाववतो जनाननुभवन्ति। एतादृशविविधस्वभावैर्मनुजैः पूर्णस्याग्निरथस्य तृतीयवर्गे निषण्णोऽमरचन्द्रोऽपि स्वबंधुना शकुनराजेन सह पान्थतां विदधे। दीर्घप्रवासतया शकुनराजस्य सर्वसंकल्पशमनी निद्रा संप्राप्ता, अमरचन्द्रो जाग्रदेवाभवत्, भाविचिन्तनां च चकार। अनलरथः स्वगतिशीघ्रतया प्रस्रवणगिरिमुल्लंध्याम्रनिम्बमधुकप्रियंगुपादपैः पूर्णां गुर्जरभूमिं प्रविवेश, धूमशकटमार्गमुभयतः शाड्वलभूमिं सस्यपूर्णानि च क्षेत्राणि विलोक्य मरुभूमितः समागताः पान्थलोका जहृषुरानन्दं च लेभिरे। अमरचन्द्रोऽपि स्वभ्रात्रा सहावर्णनीयगुर्जरभूमिसौंदर्यं विलोक्य ननन्द। शनैःशनै राजनगराभ्यर्णता समागता। तदामरचन्द्रस्य मनसि नवीनमनो-

वरीतुमिच्छुरिवोत्कण्ठिताभवत्, तां च विलोक्य पादपोपरिस्थविहगा अपि सुस्वरं विवाहगीतानि गायन्त इव शब्दानुच्चारयन्ति। एतादृशसमये शिवलक्ष्मीवरणायोत्सुकोऽमरचन्द्रः स्वभ्रात्रा शकुनराजेन सहाग्निरथस्य कनिष्ठवर्गे न्यषीदत्। अग्निरथोऽपि लोहविशेषनिर्मिताध्वनि शीघ्रतया चचाल। अथ तत्राग्निरथस्थितिभाजां पान्थजनानामुपवेशनार्थं मध्यमोत्कृष्टकनिष्ठवर्गत्रयमस्ति मार्गद्रव्यव्ययानुसारेण। अत्र जगत्यां स्वनिर्मितपुण्यकर्मभी राजत्वं प्राप्ता राजन्याश्च तथान्ये धनिनो व्यवहारकुशलास्तथा वादविषयनिपुणाश्च राजकार्ये राज्ञां मतिप्रदातारो सचिवास्तथा वादविषयेऽन्यत्रापि रूप्यकपंचशतपरिमितं येषां वेतनमस्ति ते सर्वेऽपि धूमशकटस्योत्तमवर्गे निषीदन्ति, तत्र सद्भाग्यवतां तेषां स्वशरीरसुखापादनमात्र एव धनव्ययं कुर्वतां मनःसंतोषार्थमुत्तमवर्गे विविधरचनायुक्ताः पर्यंका विद्युत्प्रदीपाश्च प्रेंखाश्च रचिताः सन्ति, मार्गे उदन्यावारणाय शीतलं जलमपि स्थापितं भवति, तत्र ते भाग्यवन्तस्त्रिगुणमूल्यं दत्त्वा निषीदन्ति। ये च मध्यमस्थितिमन्तस्ते द्विगुणमूल्यं दत्वा मध्यमवर्गे स्थानं लभन्ते, तत्र पूर्वोक्तोत्तमवर्गात् किंचिन्न्यूनसोपस्करत्वमस्ति। ये चात्र जगति सामान्यजनाः सन्ति ते कनिष्ठवर्गे स्वल्पं मूल्यं दत्त्वा स्थानमर्जयन्ति, परं चोत्तममध्यमवर्गयोर्जनबाहुल्यं न वर्तते, किंच कनिष्ठवर्गे निषण्णानां जनानां महती जनबाहुल्यता वर्तते, यथाधुनिककाले सिनेमाप्रदर्श-

तेन धर्मभावनां भावयता पितुः पवित्राचरणेन पथा प्रचलता वाणिज्यं कुर्वता स्वपूर्वोक्तनित्यकर्माणि परलोकगतस्य पितुः शान्त्यर्थं जातुचिदपि न विसस्मिरे। यैश्च वाणिज्ये मनोरुचिः शैथिल्यं प्राप्ता स्वनगरसमागतसाधुजनानां मुखाब्जनिर्गतपरमवैराग्यवचांसि निशम्य प्रत्यहममरचन्द्रस्य चित्तं रंभात्वग्वदसारं संसारं भावयतो निर्विवेद। आत्मकल्याणाय च तस्य श्रमणधर्मजिघृक्षा समजायत, तेन तथाविधशुभभावनया स्ववाणिज्यमपि शनैः शनैः समाप्तिं नीतम्। अनेनैव व्यवहारेण नगरवणिग्जनेषु विविधजनश्रुतिरभवत्। परं च तं जनापवादं मनस्यगणयता तेन स्वापणस्य सर्वामपि योग्यां व्यवस्थां निर्ममे। ततोऽमरचन्द्रः स्वभ्रात्रा शकुनराजेन सह संसारमृगतृष्णिकाजलपिपासावारणाय योग्यतां प्रापकाय साधुगुणविशिष्टसद्गुर्वन्वेषणाय च पारलौकिकाभ्युदयाय स्वनगराच्च शुभं मुहूर्तमवलोक्य गुर्जरदेशस्थितराजनगरगमनाय निर्ययौ। स्वगृहाद् धूमशकटनिर्गमनसमयमालोक्याग्निशकटगृहमागत्य स मूल्यं दत्त्वा राजनगरगमनपर्यन्तं प्रमाणपत्रं गृहीतवान्। ततो हस्तिनापुरसकाशात् कृशानुरथः समागतः, सायंसंध्यासमयश्चाभूत्। यथा लोके नवीना कन्या स्वभाग्योदयेन प्राप्तं वरं वरीतुं स्वशरीरपरिहितसर्वविभूषणशोभिता मातृगृहं प्राप्य मुदिता भवेत्तथा संध्यारुणिताकाशभागवस्त्रेण स्वीयं शरीरं भूषयित्वा तारकागणैः सहोदयं यान्तं रोहिणीरमणं

किंच वीरसेनश्रेष्ठिनो वणिग्वर्गेषु महती प्रतिष्ठासीत्। तथा वाणिज्यकार्येऽनेकानि मित्राण्यप्यभवन्। केचन तस्य पितरि परमप्रेमवन्तोऽपि। एवं पितृकृतसर्वजनस्नेहमयीं रज्जुं द्रढयितुमनाः सुपुत्रोऽमरचन्द्रस्तथैव प्रवर्तते स्मैवं स्वपित्रोपार्जितां कीर्तिममरचन्द्रो मनोनैश्चल्येन ररक्ष। इत्येवं परलोकगतस्य पितुः शुभं भूयादिति मनसिकृत्य सर्वकृत्यानि सुपुत्रेण तेन कृतान्यभवन्। इतिश्रीपरमपूज्यदीर्घतपस्विवयोवृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्र देशोद्धारकपन्यासपद्धारिगणिवर्यहिंमतविमलशिष्यशान्तमूर्त्तिप्रवर्तकमुनिश्रीशान्तिविमलविरचिते श्रीविमलगच्छाधिपतिधर्मधुरंधरशास्त्रविशारदसकलसिद्धांतवाचस्पतिविश्ववन्दनीयगणिवर्यामृतविमलचरिते पंचमं प्रकरणम्॥

मनोरथप्रवाहेण नीयन्ते सर्वजन्तवः। प्रवाहं तं विभिद्यैव विधिरन्यत्तनोति च ॥१॥
ललाटलिखितां रेखां न मार्ष्टुं प्रभवेज्जनः। इति विचार्य धीरेण वर्त्तितव्यं निरन्तरम्॥२॥

युवावस्थासमारम्भे तस्थुषो नागरिकवणिजां मध्येऽग्रगण्यतामनोरथपरम्परामारचयतो जनकयश औज्वल्यलालसां सेवमानस्यामरचन्द्रस्य जीवनप्रवाहो वाणिज्यव्यवहाराच्छीघ्रमन्यपथमेवाङ्गीचकार। तत्कारणं तु सामायकादीनि धर्मकार्याणि चैत्यवन्दनागुरुवन्दनादिसत्कर्माणि पितृपरम्पराप्राप्तानि मनागपि न तत्याज,

ममरचन्द्रस्य संसारतापनिवारकपितृच्छत्रे विनष्टे यौवनप्रवेशात्प्रागेव सर्वचिन्ताशून्यायां कौमारावस्थायामेवादृश्यतां गतस्, तस्य पित्राधाराः सर्वमनोरथा भग्नाः। जनकमृतेरनन्तरं परलोकगतस्य पितुः संतोषार्थं कार्याणि विदधता सहोदरान्प्रत्यौदार्यं दर्शयता स्वसंबन्धिजनेषु शिष्टतां वर्धयता व्यवहारकार्यावलोकनं कुर्वता जनताशुभंकराणां कार्याणां योग्यायोग्यं विचारतया स्वात्मानमसत्पथान्निवर्तयता सुपुत्रेणामरचन्द्रेणानुत्तरं पितृतर्पणमिति विज्ञायते स्म। परोपकाराय सतां विभूतय इति वाक्यममरचन्द्रः पितृपरंपरागतभागधेयवत् संजग्राह, जनकात्मनः प्रीत्यर्थं शुभकार्याणि कर्तव्यानीति तस्य मनोरथो नोपशमङ्गतः। तच्छुभसंकल्पपरंपरारूढः स लोकख्यात्यर्थं धर्मार्जनाय च पान्थजनोदन्यानिवारणाय सत्कूपादीनि कारयामास, चैत्यजीर्णोद्धारं जनमनोज्ञानवृद्ध्यर्थं पाठशालाश्च, सदाविहरणशीलानां साधूनामाश्रयार्थमुपाश्रयाश्च तेन निर्मापिताः। अकारणदयावता तेन दीनजनोपरि दयां कृत्वाऽन्नादि दत्वा संतोषिताश्च दीना एवं सत्कार्यरूपाञ्जलिस्तेन पित्रेऽर्पिता। जनकाज्ञानुसरणं कुर्वतामरचन्द्रेण पितृयशःपरम्पराभ्युदयः स्वीकार्य एवेत्यपि पितृसंतोषजनककार्यममन्यत, जीवता मत्पित्रा यथा स्वव्यवहारकुशलत्वं संपादितं तथा मयापि कर्तव्यमिति स्वमनसि निश्चिकाय सः॥

परमश्रावकस्य वीरसेनश्रेष्ठिनः प्रवृत्तेविभागस्य ज्ञानमस्माभिरग्रेतनप्रकरणेन विदितं तथा परमसुशीलस्यामरचन्द्रस्य विद्याभ्यासः पूर्णतामाप तदा तं स्ववाणिज्यकार्ये नियोक्तुमिष्टवान् श्रेष्ठी, तस्यारंभमपि बहुशश्चकार स स्वतनुजेनैव सह सर्वत्र जगामापणेऽपि स्वेन सत्रैव तं स्थापितवान्। व्यवहारिणां वणिजां व्यवहारप्रवृत्तावपि क्रयविक्रयरूपव्यवहारे तं युयोज। धर्मकार्यप्रवृत्त्यर्थं कदाचित् सभां गच्छेत्, जातुचित् समागतानां साधूनां व्याख्यानं श्रोतुं सपुत्र एव व्याख्यानमण्डपमगच्छत्। वीरसेनश्रेष्ठिनो मनसीदृशी तीव्रेच्छा समजायत कदा बुद्धिमन्तं मत्पुत्रं व्यापारकलाकुशलं धर्मकार्यनिरतं परोपकारकरणशीलमुच्चजनपरिचयवन्तं सत्वरं करिष्ये, परं सेच्छा तस्य पूर्णतां नाप, कथं तदिच्छाविघातकर्त्री तस्य शरीरे ज्वरपीडा प्रादुरभवत्। तस्य तां निवर्तयितुं कौटुम्बिकैर्भिषजां द्वारा बहव उपाया युयुजिरे, परं स व्याधिस्तस्य शरीरेऽन्तिमतां प्रापत्। स श्रेष्ठिनः शरीरं कालसादकरोत्। स्वीयान् कौटुम्बिकजनानाप्तजनांश्च मित्रवर्गं च परिदेवनवार्द्धौ निक्षिप्य परलोकं गतवान् तस्यात्मा। वृक्षः पक्षिणां पुष्पपत्रछायाभिर्यथाश्रयदातास्ति तथाऽस्मिञ्जगति सर्वसंसारप्रवृत्त्यनभिज्ञानां सुखदुःखादिद्वन्द्वमजानतां बालानां धनवस्त्रादिदानेन पिताश्रयदाता पोषकश्चास्ति, अत एव चिन्ताशून्यमनसो बालाः पितृवृक्षच्छायामाश्रिताः सुखमनुभवन्ति, तत्सुख-

तस्य मूल्यं तु न किमपि प्रतिपादयितुं शक्यते केनापि पितृजनपरंपरागतसुसंस्काराणां जनानां मनस्यनेकाः सत्प्रवृत्तयः स्फुरन्ति, वयं तान् गृहसंस्कारान् कथयामस्तादृशा मनोवृत्तयः सत्कुलीनानामेव प्रभवन्ति। शिक्षणशालायां प्रतिभावतां दीनबालानां पितृद्वारा पुस्तकादिवस्तुदानं तथा पाठशालाप्राप्तशिक्षणकरस्य च कारयामास सः। एतादृशी मनोवृत्तिस्तस्य बाल्य एव प्राप्तेति श्रूयते जनकद्वारा, बालोऽप्यमरचन्द्रः सर्वव्यसनेभ्यो निर्मुक्त एवाभवत्। ग्रहग्रस्त इव व्यसनाधीनो जातुचिदपि न बभूव। व्यसनशीलिनां छात्राणां सम्पर्कमपि स्वाभाविक्या मनस्वितया न सह इयं परिणतिरपि स्वगृहसंस्कारस्यैव फलम्। ऐहिकपारलौकिकसहायकर्तृकधर्मवशंवदानां जनानां संतानेषु कदाप्येतादृशव्यसनं न भवेदेव। एवं मातापितृपरंपरागतसच्चरितानां सद्धर्मवतां जनानां हृदयेषु सुसंस्कारा दृढा भवन्ति, तेनैव तेषामपि प्रजासु स्वस्वभावानुकरणत्वं बालानां बाल्यदशायामेव सुप्रतिष्ठितं भवति सुसंस्काराणाम् ॥ इति श्रीपरमपूज्यदीर्घतपस्विवयोवृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्रदेशोद्धारकपन्यासपदधारिगणिवर्यहिंमतविमलशिष्यशान्तमूर्तिप्रवर्तकश्रीशान्तिविमलविरचिते श्रीविमलगच्छाधिपतिधर्मधुरंधरशास्त्रविशारदसकलसिद्धांतवाचस्पतिविश्ववन्दनीयगणिवर्यामृतविमलचरिते चतुर्थं प्रकरणम् ॥

विस्मृत्यात्मशक्तिविकसनमार्गे प्रवर्तितव्यं, स्वस्वभावे नम्रताङ्गीकरणीया, जनानां स्वाभाविकमनोनैर्बल्य-स्थितिप्रेरणयोद्भूतानां दोषाणां निर्णाशहेतवे त्रपात्वमङ्गीकरणीयं मनसि, देववन्दनं सामायिकप्रतिक्रमणादि-धर्मसाधनं च साधयतां जनानां मनःसु मदमानादिदोषाः प्रवेष्टुमवकाशं न लभन्ते, तादृशकार्याण्येवैतादृशानि सन्ति हि ते दोषास्तेषु कार्येषु जनानुपद्रोतुं न प्रवर्तन्ते, प्रवृत्ताश्च वा धर्मकार्यप्रभावात् सत्वरं विध्वंसेरन्। स्ववंशाचारे परंपरासमागतदेवपूजानन्तरं भाले केसरयुक्तचन्दनस्य चन्द्रकः कर्त्तव्यतया प्रतिदिनं प्रातः कर्तव्य एवेतिकर्तव्यताममरचन्द्रःस्वमनसि बालदशाया आरभ्य एव ज्ञातवान्। शिक्षणशालायामनेकप्रकृतिविलसिता बालाः समागच्छन्ति, तेषु बाल्यावस्थासाहजिकचापल्यादिदोषतयामरचन्द्रभाले चन्द्रकं दृष्ट्वा तद्विषये ते बाला विरुद्धचर्चां बभूवुः परं तैश्च कृतामवगणनामवधूय स्वकुलाचारं पोष्टुमनाः स्वपितृपरम्पराप्राप्तमाचारं दृढतया स्वीकृतवान्। आजन्म सम्प्राप्तां कुलाचारभावनां जातुचिदपि न तत्याजामरचन्द्रः। एतादृशमानसिकवृत्तावेव जनानां संस्काराः प्रतिष्ठिता भवन्ति, तेषामेवांशेभ्यः स्ववंशकीर्तिलब्धेराग्रहः स्ववाणिज्यप्रदर्शनकुशलता स्वज्ञातिजनप्रमोदकार्यकरत्वं स्वनिवासभूमिमहत्त्वख्यापनत्वं स्वदेशपक्षपातप्रेमार्द्रता च समुद्भवति। तदुपरितनलाभोऽप्येतादृशमानसिकप्रवाहेणैव जनानामात्मवृत्तौ निष्पद्यते ॥

सह तादात्म्यं बबंध । पुरुषार्थचतुष्टयस्य भूमिर्यन्मानुषं शरीरं तदुत्पादयित्रोः पित्रोरुपरि तस्य परमपूज्यता परमादरश्च साहजिकः शरीरेण सहैवाजायत । सुश्रावकाणां सामायकादीनि नित्यकर्माणि प्रकृतिप्रतिबद्धानि, तथा नित्यकर्माङ्गवत् सायं प्रातो मातापित्रोरभिवादनं सुशीलतया विदधातिस्म, रात्रौ यदा स्वापं कर्तुं गच्छति शय्यायां तदादौ पितृवन्दनं नित्यशः करोतिस्म । इत्येवं तस्य चित्तं धर्मकार्यं सरागतामनुबभूव । मातृदेवो भव, पितृदेवो भवाचार्यदेवो भवेत्यादीनि वाक्यानि शास्त्रेषु बहुशः श्रूयन्ते जनमुखेभ्यश्च, परं तादृशसूत्रात्मकबोधपरिशीलिनाममरचन्द्रतुल्यानां केषांचिदेव सुपात्राणां हृदयेषु विलसितस्म सम्यग्बोधः । वीरसेनराजकुमार्योर्धर्मभावनाप्रतिकृतिः कीदृगासीदिति तादृशपुत्रचरितवर्णने धर्मभावनावान् पुरुषः को न जानीयात् ? अन्यच्च तस्य गृहे देववन्दनप्रचारोऽप्यपूर्व एवाभवत् । शुद्धचित्तप्रदर्शकप्रभाते प्रत्यहमुत्थाय वीतरागप्रभुं संस्मृत्य स्नानादि कृत्वा शुद्धवस्त्राणि परिधाय चैत्यं गत्वा तत्र वीतरागदर्शनं कृत्वा तं संपूज्य चोपाश्रयं गत्वा यदि साधवःसमागतास्तदा तेषां दर्शनं कृत्वा भोजनं कर्तव्यमिति तस्य गृहे नियमोऽभूत् । कथं मनुष्यत्वलाभसंपादकजीवनदशायां प्रत्यहं भवार्णवतारकवीतरागमहावीरस्य ध्यानादि भवदावानलशान्तये श्रावकैरवश्यमेव कर्तव्यमिति ज्ञात्वा स प्रत्यहमकरोत् । शारीरिकशक्तीनां महत्त्वं

णितं वस्तु सर्वमित्रेभ्यो ददातिस्म। विद्योपास्तिं कृतवतोऽमरचन्द्रस्य पाठशालायामध्यापकेनैतादृशो नियमो विज्ञापितो-यः कश्चन च्छात्रः पाठशालां प्रथममेव समागच्छेत् स प्रथमांकस्थानमेवाश्रयेत्। तस्य प्रथमांक-संपादने मनस्येतादृशी तीव्रेच्छा समजायत यथा प्रभात उत्थाय वीतरागप्रभुं स्मृत्वा स्नानादि नित्यकृत्यं विधाय भोजनादि कृत्वा प्रत्यहं शुद्धवस्त्राणि परिधाय सर्वच्छात्रेभ्यः प्रथममेव पाठशालां नित्यशो गच्छतिस्म, स एव प्रत्यहं पाठशालायां प्रथमांकमाददातिस्म। शनैः शनैरेवं सोऽप्यभ्यासं विधाय पंचमपाठ्यपुस्तकाभ्यासं समाप्तवान्। अनया रीत्या तस्याभ्यासक्रम उज्वलतां प्राप्तः सर्वजनानां संतोषोद्भावकश्चाभूत्। तस्य पिता वीरसेनस्तस्य बुद्धिविकसनं यथा भवेत्तथाविधमेव प्रयत्नं चकार॥

किंच रमणीयताविलसितस्य नगरस्य गंधादिसिक्तं निर्धूलिकं राजपथं सायं भ्रमितुं सपुत्र एव प्रत्यहं जगाम। पथि प्रचलनसमये श्रेष्ठी स्वपुत्रेण यः पाठशालायामभ्यासः कृतस्तद्विषयकानेव प्रश्नान् पप्रच्छ बालम्। एवं स्वपुत्रशिक्षणकार्ये प्रत्यहं स रसज्ञ आसीत्। यदाऽमरचन्द्रस्य शिक्षणं पूर्णतामवाप तावत्तस्य मानसिकप्रवृत्तीनामपि शुभतत्त्वानि शनैःशनैरुद्घाटितानि संजातानि, तदा सूक्ष्मा महती च प्रकृतिः शरीररचनया सहोद्भावतां प्राप्ता तस्य मनसि स्वतंत्रतया स्थिता रुचिररुचिरपि स्पष्टतया शरीरेण

मुमोच। तत्रस्थबालानां मनस्तुष्टये शर्कराप्रसृतिं भृत्वा भृत्वा सर्वबालेभ्यो ददातिस्म, तस्याध्यापकमपि चन्दनादिना संपूज्य तस्याग्र उपदां धृत्वा बालं वन्दयित्वा तत्र मुक्त्वा सदारः श्रेष्ठी स्वगृहमाजगाम। अध्यापकोऽपि तस्य शिक्षणाय पट्टिकायामक्षराणि लिखित्वा तस्मै ददौ, बालोऽप्यमरचन्द्रःस्वस्य बुद्धिप्रागल्भ्येन प्रत्यहं स्वस्याध्ययनकुशलतां दर्शयामासाध्यापकाय। तस्याध्ययनतीव्रतां बुद्धिमत्तां चावलोक्योपाध्यायस्यापि तदुपरि स्नेहाविर्भावोऽभूत्। तत्समयानुसारिणीं पद्धतिमनुसृत्य तत्र पाठशालायां वाचनांकगणितक्रमं शनैः शनैश्चित्तं दत्त्वा सर्वं स्वमनीषायां धारयामास। अमरचन्द्रोऽप्यन्येभ्यगृहस्थबालानां पंक्तिषु चाभूत्। अतएवोपाध्यायस्यापीतरगृहिबालेष्विव तस्मिन्नपि तादृगेव द्रष्टिरभवत्। पाठशालातो मध्यान्हविसर्जनसमये सर्वे बालाः पाठशालातो निर्गच्छन्ति तदा खाद्यपदार्थेषु भोजनरुचिर्जायते तत्तु स्वाभाविकम्। तत्समयानुसारिणीं पद्धतिमादृत्य श्रेष्ठी स्वबालाय खाद्यमादातुं प्रत्यहमाणकद्वयं ददातिस्म। विद्योपार्जनशीलस्यामरचन्द्रस्य संवर्धनं कुलीनगृहस्थस्येवाभवत्। अत एव स्वस्मै पित्रा दत्तं यदाणकद्वयं तस्मात्खाद्यवस्त्वानीय तत्र स्वमित्राणि दायादांश्चक्रे। एतेनामरचन्द्रः स्वमनस्यानंदं मेने। आनंदोऽप्येतादृशं वस्त्वस्ति हि तस्य व्यक्ततां विना तस्य भोग्यत्वं न जायते, अत एव तस्य व्यक्ततादर्शनाय स्वकी-

तर्हि तादृशो महापुरुषो नाभविष्यत्। अन्यच्च यदा स्वपाटकाग्रे नटगारुडविद्याभिज्ञाः खेलां दर्शयितुं समागच्छन्ति जनान् तदामरचन्द्रः सवयोभिर्बालैः सह द्रष्टुमधावत्, तेऽपि नवीनवस्तुप्रदर्शनेन जनान् रंजयित्वा तेषां खेलादर्शनकर्तॄणां जनानामग्रे स्वोदरपूर्तये पात्रं गृहीत्वा याचन्ते स्म तदा सोऽपि मातरं गत्वा तेभ्यो यत्किंचिद्दातुं प्रयततेस्मेदृशाः संस्कारास्तस्य मनसि बाल्य एव पतिताः। अनया रीत्या प्रतिदिनं धर्मपरिणतचित्त इन्दुकलावद् वृद्धिमियाय सः इत्थं जननीजनकौ पुत्रमुखं दृष्ट्वा स्वीयान् सुखमयान् दिवसान् व्यतीयतुर्बालस्य संवर्धनं प्रेम्णा नित्यशश्चक्रतुश्च। इतिश्रीपरमपूज्यदीर्घतपस्विवयोवृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्रदेशोद्धारकपन्यासपदधारिगणिवर्यहिम्मतविमलशिष्यशान्तमूर्तिप्रवर्तकश्रीशान्तिविमलविरचिते श्रीविमलगच्छाधिपतिधर्मधुरंधरशास्त्रविशारदसकलसिद्धान्तवाचस्पतिविश्ववन्दनीयगणिवर्यामृतविमलचरिते तृतीयं प्रकरणं समाप्तम् ॥

सर्वजीवसंघातायुःक्षपयितरि काले स्वकार्यं कुर्वति कौमारावस्थावस्थितामरचन्द्रमध्यापयितुं श्रेष्ठैच्छत्तदा ज्योतिर्विदं गणकमाहूय बालस्य पाठशालागमनमूहूर्तं पप्रच्छ, तदा तदादिष्टकालमनुसृत्य शुभदिवसशुभशकुनवारादि ज्ञात्वा वादित्रध्वानपूर्वकं स्वबांधवैः सह स्वयमेव श्रेष्ठी पाठशालां गत्वा बालमध्यापयितुं

दुर्गुणा उत्पद्यन्ते, तादृशां प्रकृतिमतां जनानां बाहुल्येनास्मिञ्जगति धर्माधर्मप्रतीतिरपि दत्तजलांजलिः
संभवेत्। ऐदानींतनराजन्यानां मध्ये ये विदेशगमनव्यसनिनः स्वमित्रैःसह तं विदेशं गत्वा प्रजाबहिःप्रा-
णभूतेन धनेन स्वशरीरेन्द्रियादिपोषणं कुर्वन्तो महता धनव्ययेन तत्रत्यपदार्थान् क्रीणित्वानेकजनानां वृत्ति
ते पादैर्मृदुनन्ति, कुमित्रप्रसंगानेकव्यसनग्रहग्रस्तास्ते दिवानिशं क्व गच्छन्ति, इत्यपि न जानन्ति, ते च
धनराशिसम्पन्नत्वात् वक्तव्यमात्रमहत्त्वात् कुमार्गस्थितत्वाच्च स्वमनोरश्मिग्रहणे न शक्नुवन्ति। कुसचि-
वाधीनास्ते चास्माकीनराज्यस्थितिः कीदृशी भवतीति विलोकितुमपि न शक्नुवन्ति, तदा दीनप्रजार्त्तघोषण-
श्रवणं तु तेषां दूरतरम्। एवं स्वच्छन्दविहारिणो राजानोऽद्य संजातास्तत्कारणमपि दुष्टजनसंसर्ग एवातएव
गृहस्थैः स्वप्रजाः शिष्टगुणानुवर्तिनीः कर्त्तव्या येनान्येषामाधारभाजां जनानां सुखाप्तिर्भवेत्। अतएव
मातृपित्रादयोऽपि विनयादिगुणैनैव स्वबालान् संवर्धयेयुस्तदेव बालाः सुसंस्कारवन्तो भवन्ति, येन सर्वेषां
कल्याणकरत्वं स्यात्। किशोरदशायां स्थितस्यामरचंद्रस्य तदवस्थायामेव मातापित्रोः सुसंस्काराः प्रतिबिं-
बिता अभवन्। स्वभावोऽयं बालस्य यद्गृहे पितरावाचरतस्तदेवानुकरोति बालस्ततोऽयमपि बालो मातापि-
त्रनुकारी संजात आगामिनि समये च महापुरुषः समजनि। यदि तस्य चेतस्येतादृशाः संस्कारा नापतिष्यन्

हितान् वेपमानांस्तेषां बालकान् दृष्ट्वा संजातातिकृपया स्वपरिहितवस्त्रमप्युत्तार्य तेभ्यो ददातिस्म । एवममरचन्द्रस्य हृदयमाबालं कृपासमलंकृतमेवाभूत् , इति विज्ञायते तस्य चरितेन ।

वीरसेनश्रेष्ठी यदा जिनालयं वोपाश्रयं देवगुरुवंदनार्थं गतवांस्तदा तं सहादायैव जगाम,देववन्दनं गुरुवंदनं च कुरुते स्म । अनया रीत्याऽमरचन्द्रस्य हृदये बाल्यावस्थायामेव साहजिकधर्मसंस्काराणां बीजवापः समजनि, धर्मपथप्रवर्त्तनमपि। बालान् पितरौ शैशवादारभ्य यादृशान् विनयन्ते तादृशास्ते यौवने समुद्भवन्ति। अनुत्तमस्वभाववतां कुटुंबिनां संस्कारा येषु बालेषु प्रतिबिम्बन्ति ते बाला अप्यग्रतनकाले जगदुद्धरणक्षमा महापुरुषा जायन्ते,पुनश्च येन विदेशगमनकुशलाः परभाषाभिज्ञा धनसम्पादनदक्षा उत्तमव्यवहारिणश्च सर्वविदेशीयजनस्वभावाभिज्ञाः साहसिकाश्च जायन्ते,इति पूर्वोक्तस्वभावनिष्पन्नकारणमेतावदेव भवति नान्यत्। प्रशस्यान्ववायोत्पन्नानामद्यतनगृहस्थानां पद्धतिरियमस्ति–ह्यधमकुलोत्पन्नस्वभृत्यैः सह स्वीयान् बालान् बहिः परिभ्रमणाय प्रहिण्वन्ति, एवमेव वेतनदानसमर्थाः सर्वे धनिनः कुर्वन्ति। एतेन स्वस्य महत्त्वं यशस्वत्त्वं च मन्यते। अनेन सहवासेन कर्मकराणां यद् दौर्जन्यं तेषां मनसि प्रतिफलति, शतसंख्यप्रमाणेषु बालेषु नवनवतिप्रमाणा यौवने प्राप्ते कुप्रकृतयो भवन्तीति सर्वजनविदितमस्ति । कुत्सितस्वभाववतां संपर्केणान्येषामपि चेतःसु तादृशा

किंतु बालानां सर्वेन्द्रियाणां ज्ञानोपलब्धिर्यदा भवति तद्दिनादारभ्य बुद्धिविकसनारंभः संजायते। यथा शुद्धस्फटिकमणौ तस्य तस्य पदार्थस्य प्रतिबिंबं पतति, यस्य यस्य पदार्थस्य सांनिध्यं भवति तत्प्रतिच्छायया मणिरपि तादृगाकारो मनुजदृष्टौ दृश्यते, तथा बालानामपि यादृशामुत्तममध्यमजघन्यप्रकृतिमतां सहवाससंयोगादिर्जायते तादृगाचरणा एव बाला अपि भवन्ति, इति सर्वजनीननयो विद्यते, अतएव शिक्षणपद्धतिकुशलाः पंडिता अपि महता शब्दस्तोमेन जागरयन्ति जनव्रजान्—भो जनाः ! स्वीयान्बालाञ्जगत्यनेकोपकारिसाहिजकधैर्यगांभीर्यादिदयादाक्षिण्यादिगुणविशिष्टैः पुरुषैः संसर्गयन्तु, अन्यथा पापपङ्कनिमग्ना दुर्वृत्ता दुष्टपथवर्त्तिनो भविष्यन्ति निश्चितम्। अमरचन्द्रस्य दीनजनः कश्चन दृष्टिपथं समायाति तदा तस्य चित्तं दयार्द्रभावं भजति, मातरञ्चापृच्छदिति—मातरिमे जनाः किमर्थं प्रतिगृहं प्रतिदिनं याचन्ते ? ते क्वास्तव्यास्तेषां गृहाणि कुत्र सन्ति ? तादृशान् प्रश्नान् बालोऽप्यमरचन्द्रोऽकरोत्। एतत्पुत्रवचो निशम्य माताब्रवीत—पुत्र ! एतेषां गृहाणि न सन्ति, ते ग्रामे धर्मशालासु गृहवेदिकासु च वने वृक्षाणामधः स्वपन्ति रात्रौ, नगरखेटखर्वटादिषु भ्रामं भ्रामं जनेभ्योऽन्नमर्थयित्वा स्वीयां क्षुधां निर्वापयन्ति। अमरचन्द्रोऽपि जननीवचनं श्रुत्वा जातावर्णनीयदयो मात्रान्नादि याचकेभ्यो दापयति स्म। जातुचिच्छिशिरकाले चैलर-

यतां केषांचिदापातरमणीयतां बहुश आलोचितवान्। इदं क्रीडनकं किं मृण्मयं वा रीत्यादिधातुमयं वस्त्रनिर्मितं वेति ज्ञातुमाकाङ्क्षां प्रदर्शितवान्। एवं चिन्ताशून्यशैशवानुभवं कुर्वन्तं बालममरचन्द्रं श्रेष्ठी वीरसेनस्तस्य मातृपार्श्वादाकार्य प्रेम्णा स्वांगुल्या तदंगुलिं स्वीकृत्य नगरस्य चतुष्पथराजितापणस्य शोभां निरीक्षितुं निनायासकृद्बालम्। एवं प्रत्यहं सांध्यानेहसि श्रेष्ठी बालं समादाय संसारसुखास्वादमास्वादमानो जहर्ष मनसि। बाल्यावस्थावस्थितामरचन्द्रस्य बाल्यावस्थायामनेकशः क्रीडाःसमभवन्। कदाचिद्रथ्याबालसमूहमाहूय तैःसमं विविधक्रीडाश्च कृतवान्, सवयोभिर्बालैः सह क्रीडितुं स्वस्य श्रैष्ठ्यं चाधिकतां दर्शयितुं सम्राज इव तस्य मनोभिलाषोऽजायतान्येषामपि बालानां क्रीडनकानि स्वायत्तीकृत्य तदुपरिच्छिन्नभिन्नतानुभवं चकार तथापि तस्य तैःसह मित्रभावस्तादृगेवासीत्। स स्वपितुः सकाशाद् यद्भक्ष्यं वस्त्वानीतवान् तस्मिन् स्वमित्राणि संपूर्णतया दायादान् कृतवान्, जातुचित स्वभागं गृहीत्वा सर्वमपि वस्तु सवयस एव यथाभागं दत्तवान्। अमरचन्द्रस्य यथा बुद्धिविकाशः स्यात्तथा श्रेष्ठी नियमिततया चिंतितवान्, माता राजकुमारी च स्वतनयशरीरपुष्टिर्यथा स्यात्तथाऽन्नादिना पोषितवती स्वपुत्रम्। पित्रोरेवं प्रणयपूर्वकं संरक्षणतायां बालोऽप्यमरचन्द्रो ववृधे, शैशवं विहाय च कौमारं प्रविवेश। जनानां यावज्जीवनोपयोगिबुद्धिविकसनं न शिक्षणशालायामेव प्रादुर्भवति,

प्रवर्तनशीला अपि संबभूवुः। केचन तस्य साधून् प्रति भक्तिं विलोक्य धन्योऽयं वणिगिति स्वचेतसि मेनिरे नागराः ॥ इतिश्रीपरमपूज्यदीर्घतपस्विवयोवृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्रदेशोद्धारकपन्यासपदधारिगणिवर्यहिम्मतविमलशिष्यशान्तमूर्तिप्रवर्तकश्रीशान्तिविमलविरचिते श्रीविमलगच्छाधिपतिधर्मधुरंधरशास्त्रविशारदसकलसिद्धान्तवाचस्पतिविश्ववन्दनीयगणिवर्यामृतविमलचरिते द्वितीयं प्रकरणं समाप्तम् ॥

भाविविज्ञानपात्रस्यामरचन्द्रस्य जनुर्यदा वसुनवनिध्यंकवर्षे जातं तदेन्द्रप्रस्थस्य व्यवहारिषु श्रेष्ठिजनेषु वीरसेनश्रेष्ठिनो नामधेयमग्रगण्यमभूत् ॥ आर्हतमतप्रतिपादितधर्ममार्तंडप्रकाशेन तस्य कुटुंबकमलोद्यानं विकसिततामासदच्च । अमरचन्द्रस्य शैशवावस्थापि तस्मिन्नेव समये समारब्धा। बाल्य एवामरचन्द्रः प्रतिभावान् प्रभावशील उत्साहवान् ओजस्वीत्यादिगुणालंकृत एव संजातस्तीव्रजिज्ञासावांश्च। तस्मिन्नमरचन्द्रे शिशुसाहजिको बाल्याग्रहोऽप्यासीत्। सवयोभी रथ्यामाणवकैः सत्रा तेषां क्रीडनकेषु विविधां क्रीडां वितेने। यस्मिन् दिवसे स्वजिज्ञासापूर्तये धनव्ययेन प्रभूतानि क्रीडनकानि क्रीणित्वा किंचित्कालं देवित्वा तस्मिन्नेव दिने भंक्त्वा निरस्तवान्। स कस्यचित् क्रीडनकस्योपरितनां शोभां कस्यचित् क्रीडनकस्याकारस्य रमणी-

अनयोर्दंपत्योर्वीतरागभगवति भक्तिभावना दृढा समजायत। अनया प्रणालिकया श्रेष्ठी स्वात्मानमानंदितं मेने गार्हस्थ्यसाफल्यं च। यदा स आपणाद्गृहमाजगाम तदा स्वीयतेजस्विनं बालमंके निधाय निवातकमलस्तिमितेन चक्षुषा पश्यन् कपोले तस्य चुचुम्ब। शिशुरप्यमरचन्द्रोऽजातदन्तमुखेन हास्यं कृत्वा जननीजनकयोर्मनसोमुदं ततान। गार्हस्थ्येऽयमेव परमो लाभो गृहिणां यद्धर्षेण पुत्रमुखावलोकनं क्रियते दंपतीभ्याम्। तदा वीरसेनश्रेष्ठीन्द्रप्रस्थनगरे जैनसमुदाये धनादिवैभवेनाग्रगण्योऽभवत् सुखभाक् च। स्वान्तशान्तिकरणसमर्थेनामरचन्द्रजन्मना बहुशः सुखमनुबभूव श्रेष्ठी। पादरजःपावितानेकप्रदेशा जैनसाधवो यदा यदेन्द्रप्रस्थं समायान्ति तदा तदा स श्रद्धाभावितान्तःकरणो भूत्वा मुन्यागमनश्रवणेन हर्षितमनाः सद्य एव सर्वाणि कार्याणि विसृज्य वन्दनार्थं गच्छति, तान् प्रासुकान्नजलादिदानेन प्रत्यलाभयच्छ्रेष्ठी। मुनीनामपि यानि यानि वस्तूनि कार्योपयोगीनि भवेयुस्तानि तानि सर्वाणि प्रदाय तेषां मनांसि प्रसन्नीकृतवान् सः। एवं प्रत्यहं साधुवैयावृत्यकरणेन पुण्यं परलोकपाथेयं चिकाय वणिग्। अन्यानपि शैत्योपमर्दितान् दीनजनानवलोक्य जातकृपो वीरसेनश्रेष्ठी तेभ्यो वस्त्रजलान्नादि प्रदाय तेषामपि कष्टं निवारयामास। तस्मिन् समये वीरसेनश्रेष्ठिन औदार्यं धर्मभावना च नगरे विशेषतो वृद्धिं प्राप्ता, यां दृष्ट्वा जना आर्द्रचित्ताः समजायन्त। केचन तस्य पथा

समयातीतवसुनिधिवस्वेकवर्षे वैशाखशुक्लैकादशीदिने केन्द्रस्थानस्थितशुभग्रह उच्चराशिस्थितसूर्यादिग्रहे समये मैत्र्यादियुक्तशुभग्रहसूचितभाग्यसंपदं पुत्ररत्नमजीजनद्राजकुमारी । वीरसेनश्रेष्ठिगृहे पुत्रजन्माभूदित्युदन्तं सर्वनगरप्रजासु सर्वसंबंधिजनसमुदायेऽपि समस्तप्राणिप्राणनतत्परः पवनः प्रसारयामास, तेन सत्राप्यानंदोऽप्यवर्धत श्रोत्रजनमनःसु । यस्मिन् पुत्रजन्ममांगलिकप्रसंगे रसनारसवर्द्धिनीःशर्कराः प्रसृतिं भृत्वा भृत्वा श्रेष्ठी जनान् दापयामास भृत्यैः । जिनमंदिरेष्वष्टाहिकामहं पूजाशान्तिस्नात्रादि धनव्ययेनाकारयत् । तेन दीनदारिद्र्यनिवारकं दानं चादायि भोजनादिकमपि च । अनेनोत्सवेन श्रेष्ठितत्संबंधिसर्वजना आनंदिताःसमभवन् । पुत्रस्य नामधेयममरचद्रेति व्यधात् । दिनव्यत्ययेनामरचन्द्रः काकलिकया वाचा मातापित्रोरानन्दं वितेने । सर्वौषधीजीवनदायी निशाकरइव दिने दिने वृद्धिं पुपोष बालकः । तयोर्दंपत्योर्हर्षाब्धिः पुत्रमुखं दृष्ट्वा सुतरां ववृधे । श्रेष्ठिगृहेऽमरचन्द्रस्य पदपंकजेन पवित्रिते जाते तस्य क्रयविक्रयरूपव्यवहारे महान् लाभः समजायत । पणायकार्ये धनलाभेन श्रेष्ठी चिंतितवान् । प्राप्तलक्ष्म्या अयमेव परमो लाभो यद्धर्मकार्ये व्ययःकर्तव्य इति मत्वा स सप्तक्षेत्र्यां धनव्ययमकरोत् । यथा प्रावृषि कृष्टे क्षेत्रे कृषीवलो महते लाभाय धान्यं वपति तथाऽयमपि तथैवाकरोत्। सुपात्रे दानं दयादानमपि धनव्ययेन धनवता जनेन विधातव्यम्।

ब्रवीत्—स्वसः ! शृणु प्राप्तोऽयं स्वप्नो तव मनोरथपूरको भविष्यति, कुलदीपकःसुपुत्रो भावी जैनशासनसमुद्योतकश्च पित्रोर्नामजगति प्रथयिष्यति, मुनिमुखनिर्गतान् वाग्देवतावर्णान् निशम्य जहर्ष राजकुमारी। गुरुवन्दनं कृत्वा स्वगृहं गतवती गृहकार्ये निमग्ना चाभवत्॥ जगतीतलनिवासिनां नयनीभूतः सर्वरसपरिपाकपरिणमयिता सर्वाकाशप्रदेशविहरणेन श्रमं गत इव सर्वमनुजानां दिनभवक्लेशं शमयितुं यदा सविताऽस्तमगात्, सायंतनी संध्या च प्रवृत्ता तदा पटहझल्लरशंखघंटादिवादित्रपूर्वकं देवमन्दिरेषु भगवत्प्रतिमानां निराजनान्यासन्, तदा वीरसेनश्रेष्ठी स्वापणं मुद्रयित्वा स्वनिकेतनमागतवान्, भोजनादिकं कृत्वापणिकं सर्वं व्यवहारं गणयित्वा सुन्दरविष्टर उपविश्य कृतलंबितपादो यदा विशश्राम तदावसराभिज्ञा राजकुमारी स्वपतिं गतरात्रिसमागतस्वप्नवार्तां कथयितुं प्रवृत्ता। स्वामिन् ! मया रात्रौ स्वप्ने करिदर्शनं कृतं। प्रातरुत्थाय स्नानादि कृत्वा भगवद्दर्शनं विधायोपाश्रयं प्राप्य भानुचन्द्रं यतिं नत्वा रात्रिस्वप्नो मया निवेदितस्तदा तेन यतिना पुत्रप्राप्तिफलः स्वप्नोऽस्ति, पुत्रोऽपि जैनशासनोद्दीपको भविष्यतीति मह्यमभिदधे। तच्छ्रुत्वा वीरसेनश्रेष्ठी जहर्ष, तस्य हृदये धर्मे धर्माराधनफलेऽप्यधिकतरा श्रद्धा समुत्पेदे। समयः सद्य एव व्यत्येति अहंपूर्विकान्यायेन घस्राद् घस्रो व्यतीताय, स्वल्पेनानेहसा राजकुमारी गर्भं दधौ, तेन तौ दंपती स्वप्नं सत्यं मेनातेऽन्ततो विक्रमार्क-

वीरसेनश्रेष्ठी तत्रवास्तव्य आसीत् ॥ तथैव प्रतिव्रताधर्मपरायणा पतिचित्तानुवर्तिनी साधुजनसेवापरायणा जैनधर्मदृढरुचिः समयोचितव्रतधारिणी नाम्ना राजकुमारी पत्नी बभूव ॥

तौ दंपती स्वसमयं धर्माराधने साधुसत्कारे च व्यवहारकार्ये च निर्गमयांबभूवतुर्ययोश्च चित्तसंतुष्टिकारकं वंशवृद्धिकरं किमप्यपत्यं नाभूत् ॥ पुरुषाणां मनसि तादृशी संततीच्छा न भवति यादृशी वनितानां मनसि जायेत। जैनमते शासनदेवताप्रभावेणाश्रितजनानां कार्याणि सिध्यन्तीति मनसिकृत्य कथयति कदा शासनदेवता अस्मासु प्रसीदेत्? प्रसन्नतां च प्राप्ता सा कदा संततिर्मे दद्यात् ? नहि शासनदेवतानां किंचिदप्यकिंचित्करमस्तीतिचिन्तयित्वा पुत्राभावनिमित्तविषादमकरोत् सा ॥ एतादृशं राजकुमार्या मनोरथमवबुद्ध्य शासनदेवता प्रसन्नीभूय रात्रौ स्वप्नं ददौ प्रसन्ना चाभवत्। तदा धर्मपरायणा सती राजकुमारी स्वप्ने श्वेतनागं ददर्श। बालातपपाटलीकृतजगल्लोके निजरश्मिनिरस्तसंतमसो लोकचक्षुर्भानुर्विभाभास्वरः प्राच्यामुदीयाय। तदा राजकुमारी शय्यात उत्थाय महावीरस्मरणं कृत्वा कृतध्यानादिक्रिया धर्मध्यानं कृत्वा जिनालयं गत्वा तत्र तीर्थंकरस्य वीतरागस्यभगवतो दर्शनं विधाय तत उपाश्रयं प्राप्य तत्र स्थितं भानुचन्द्रयतीश्वरं नत्वाप्रच्छत्-मुने ! गतायां रात्रौ मया स्वप्नो लब्धस्तत्रश्वेतकरी दृष्टस्तेन मम किं फलं भावि ? राजकुमार्या इमं प्रश्नं कर्णप्राघूर्णिकं कृत्वा यतीन्द्रोऽ-

भूत् । यस्मिन्नगरे पोषधशाला बहूनि चैत्यानि च स्थापितानि सन्ति । यत्र पादपांशुपवित्रितानेकजनव्रजाः शासनोन्नतिकारिणो भवभयहारिणीदेशनापीयूषाप्लावितजनान्तःकरणाः सर्वदर्शननिष्णाता आचार्योपाध्यायसाधवोऽत्र बहवो विहरन्ति स्म ॥ यत्रास्माकीनकथानायकस्य प्रादुर्भावोऽभवत् ॥ इतिश्रीपरमपूज्यदीर्घतपस्विवयावृद्धविमलगच्छाधीशानुयोगाचार्यव्याख्यानवाचस्पतिसद्धर्मरक्षकमहाराष्ट्रदेशोद्धारकपन्यासपदधारिगणिवर्यहिम्मतविमलशिष्यशान्तमूर्त्तिप्रवर्तकश्रीशान्तिविमलविरचिते श्रीविमलगच्छाधिपतिधर्मधुरंधरशास्त्रविशारदसकलसिद्धान्तवाचस्पतिविश्ववंदनीयगणिवर्यामृतविमलचरिते प्रथमं प्रकरणं समाप्तम् ॥

॥ अथ द्वितीयप्रकरणं प्रारभ्यते ॥ एवं विविधजनसुशोभितं पातशाहिराजधानीभूतत्वादभ्रंलिहाग्रैः प्रासादैरन्येभ्यजनहर्म्यैर्नगररम्यप्राकारेण च ताजमहालजुमामसजिदसंज्ञकनानाधर्मस्थानैश्चान्यदर्शनकाराणां स्थानैर्देशान्तरीयजनमानसाकर्षकैश्च दर्शनीयैः प्रदेशैरद्यापीन्द्रप्रस्थनगरं भारतभूमौ सुप्रसिद्धमस्ति । जैनधर्माश्रितानां जनानां बाहुल्यं यत्र वर्तते। यत्र स्वधर्मतत्परा देशनादानचतुराश्च आचार्योपाध्यायसाधवो यत्र गत्वा प्रभुमहावीरस्यादेशं जनान् ज्ञापयन्ति पालयन्ति च ॥ एवंविधस्य यस्य नगरस्य वणिजां पाटके वणिजामुत्तमो जैनधर्मतत्परःसुश्रावकःसम्यक्त्वव्रतधारी द्वादशव्रतपालको देशविरतिपरायणो जैनधर्ममर्मज्ञाता

एतादृश इन्द्रप्रस्थनगरेऽस्माकं कथानायकस्य परमपूज्यस्य गणिवर्यस्यामृतविमलगुरोः प्रादुर्भावो बभूव । पूर्ववर्णितसुषुमाविशिष्टस्य नगरस्याभ्यर्णे प्राकारस्पर्शिशीतजलविशिष्टाया यमस्वसुरुत्तुंगतरंगसंपर्केण शीतलीभूता यमुनाजलपानवर्धितानेकपादपप्रसूनचयगन्धवन्तो वायवो विषयान्तरागतसौन्दर्यनिरीक्षण-कौतुकिनां जनवृन्दानामितस्ततःपरिभ्रमणवशाज्जनितश्रमजातस्वेदलवानाचामन्ति । अस्य नगरस्य सर्व-शोभानिरीक्षणकारिभिः स्वरचितदेशयात्रानिबंधे बहुशः शोभा वर्णितास्ति । जगतीप्रसिद्धस्य यस्य नगरस्य मध्ये पातशाहिराज्येऽप्याचार्यदेशनया वात्यया प्रेरिता धर्मपताका इतस्ततः परिस्फुरन्तिस्म । चरमतीर्थंकर-स्य महावीरस्य भवाब्धितारकमहामंत्रस्य प्रवर्तकाः पापपंकनिमग्नजनतासमुद्धरणाय समर्था जैनाचार्यास्तत्स-मयेऽप्यपि व्यहरन् परं तत्र हैमोपमानां साधूनां मध्ये हीरक इव हीरसूरीश्वरो यदा पातशाहेर्हृत्कमलं जैनधर्मोप-देशेनोद्बोधयामासोष्णदीधितिरब्जमिव तदा स धर्मोपनिषदं श्रुत्वा यवनोऽपि जैनधर्मकृतादर आचार्योप-देशात् सर्वजनानां यत्करादानं तन्निवारयामास । आर्यप्रजानामन्यदपि याचितं प्रसन्नतया ददौ ॥ पर्युषणप-र्वणि चामारिं प्रवर्तयामास । एवं जैनधर्मजिज्ञापयिषवो धर्मतत्त्वे श्रद्धोपपादकाः श्रीहीरसूरीश्वरादय आचार्याः खल्वपूर्वपुरुषा नरवीरा अस्मिन् धर्मे समजायन्त । यवनराजधानीसमयेऽप्यस्मिन्नगरे जैनधर्मस्य मध्यान्होऽ-

बोधोऽदायि तत्तु प्रकरणेनानेनानुमीयते पातशाहेरक्कब्ररस्य पश्चात्तस्य प्रपौत्रशाहजानेति नीतिशाली राज्यषडंगज्ञानवान् स्वजातीयजनेषु चेतरेष्वार्यजनेषु पक्षपातरहितया बुद्ध्याऽवर्तत । यद्राज्ये स्वधर्मपालने सर्वा अपि प्रजाः स्वतंत्रा अभूवन् ॥ केषांचिदपि स्वस्वधर्मपालने कोप्युपरोधो नासीत् । ते राजानोऽपि धर्मतत्त्वमवगाहमानाः स्वस्वधर्मावलंबिनामार्यविदुषां व्रातं समाहूय स्वसदसि वादं विधाप्यार्यधर्मं प्रति दर्शितादरा अजनिषत । पितर्युपरते यदा शाहजानो राज्यधुरामुवाह तदानीमपि यवनपातशाहीनां विभूतिरवर्णनीया बभूव । येषां विभवानां समालोकनेच्छया चीनजापानजर्मनांग्लदेशीयाःसर्वा अपि प्रजाः स्वबुद्धिनिर्मिताग्निरथानलनौकादिसाधनान्यवलंब्य देवा विमानानीव समागच्छन्ति प्रतिसंवत्सरमार्यभूमाविन्द्रप्रस्थनगरम् । यत्र शाहजानपातशाहिः स्वप्राणप्रियाया मुमताजनामकमहिष्याः कबरोपरि नवकोटिधनव्ययेन विभवानां साक्षात् प्रतिबिम्बमिव ताजमहालनामकं प्रासादमचीकरच्छिल्पिभिः, यस्य शोभां दर्शंदर्शं जनाः कौतुकिनो भवन्ति । एतादृशः प्रासाद आर्यभूमावन्यत्र कुत्रापि नास्ति, अस्यामार्यभूमाविदमेवावलोकनीयमस्त्यन्यजनपदापेक्षयेति सर्वैरपि जनैर्मन्यते । तत्स्थानापेक्षयासाधारणानि यवनधर्मस्थानानि न चान्यधर्मस्थानान्यपि जनाश्चर्यकराणि भवन्ति, यैःस्थानैःप्राचीनवैभव आर्यभूमौ कीदृशोऽभूदित्यनया कार्यनिर्मित्यानुमीयते जनैः।

धर्मप्रतिपादनया गिरा नौकया तारितशरणागतजीवोऽनगारवृन्दजुष्टो धरित्र्यां विहरन् भव्यांभोजविकसने सप्तसप्तिरिव भवदावानलदग्धानां जीवानां शरणागतानाममृतरश्मिरिवामृतकल्पया गिरा शीतलयन्ननेकदुरितानलदग्धानां जीवानां चेतांसि सान्त्वयन्नेकदाऽक्कबरराजधानीविलसितं हस्तिनापुरनामकं नगरं हीरसूरीश्वरनामाचार्योऽयासीत् ॥ तदा चतुर्विधसंघजनेन वादित्रघोषपूर्वकं प्रत्युज्जग्मे, सादरं संघजनेन वन्दितः परमाचार्यो ग्रामं प्रविश्य ससंघ उपाश्रयं प्राप्तस्तदा श्रावकैः सोत्साहं प्रभावना कृता। स्वधर्मानुयायिनामन्येषां चात्र आचार्येण जनहृदयान्धकारनिवारिणी देशनाभिदधे, पश्चाद् गृहिणः स्वस्वस्थानं गताः, साधवो जलान्नादिदानेन प्रतिलाभिता एष एव हि गृहिधर्मः पूज्यानामातिथ्यं करणीयम् पात्रे दानञ्च ॥ एवंपुनःपुनराचार्यो हीरसूरीश्वरस्तत्पत्तनमाजगाम परंच प्रथमागमनसमय एव पातशाहेरक्कबरस्य मतिमुखावलोकनं जैनधर्मतत्त्वदर्पणे कारितवानाचार्यो हीरसूरीश्वरस्तेन तस्याचार्योपरि बहुमानमासीत्। पुरातनेतिहासप्रकरणे बोधदायिनामग्रगण्य आचार्योऽमरकीर्तिमलभत, तदानीं स्वपरिचयसमागतानां जीवानां मध्ये केचन तस्य पीयूषवर्षिण्या वाचया भूरिशो जना जैनधर्मतत्त्वं बुभुत्समानास्तस्य शरणमीयुस्ततः कतिपयजनाः प्राप्तसम्यक्त्वाः केचन स्वीकृतश्रावकधर्मा अभूवन् ॥ तैराचार्यैःकीदृशो

दोपश्रवणे वधिरता परदोपकथने मूकता परवनितास्पर्शने जडता परसुन्दरीरूपदर्शनेऽन्धता सज्जनेष्वादरत्वं मतिपु पूज्यत्वं वात्सल्यं साधर्मिकेपु गौरवता गुणिषु निरभिमानिता पितृभक्तौ सव्रीडता च नीचकार्येपु उत्साहता च प्रशस्तकार्येषु चाभूत् ॥ यस्योपकंठे यमस्वसुःसानिध्यं वर्तते सर्वदा, यस्याःस्रोतो वारुणीपानमदमत्तस्य हलधरस्य स्कंधदेशात् स्रस्तमुत्तरीयमिव प्रावृण्मेघश्यामलिताविलसितमाकाशमिव प्रतिभाति ॥ मरकतमणिवद्धसोपाना पानीयपिपासासमागतानेकपक्षिवृन्दजुष्टा चूताशोकजम्बूप्लक्षन्यग्रोधादिवृक्षपरिवृता पादपोपरि निविष्टनानाविहगनादैः श्रमोदन्यावारणाय पान्थजनतामाह्वयतीव राजीवराजिविराजितशब्दायमानमधुकरमुखेन प्राचीननरेशानां यशोगानं कुर्वतीव यमुनानदी यस्य संनिधौ वर्तते तस्येन्द्रप्रस्थस्य भूमिः पुरा पुरातनपांडवकौरवाणां समये पाण्डवराजधानी बभूव। तदनंतरं पातशाहिराज्यमासीत्, यत्र पातशाहीनामप्यवर्णनीया सम्राट्तासीत। वैभवधनसमृद्धिरपि देवानामप्यवर्णनीयाजनिष्ट। तत्समये यवनसत्तासंपादकआर्यधर्ममान्यशीलः पातशाहिरक्कवरो राज्यधुरामुवाह, येन भिन्नभिन्नधर्मावलंबिभिः स्वमतप्रदर्शनपण्डितैः स्वमतमान्यपदार्थविवेककर्तृकैरनेककोविदैरार्यधर्मःसमभ्यसितश्चक्रे ॥

एकदा जिनधर्मोक्तपदार्थतत्त्वविवेक्ता धर्मप्रवर्तकोऽनेकपापकर्मनक्रादियादःपरिपूर्णभववारिधेर्द्वादश-

टुत्रिफलाशर्करारामठादिवस्तुव्रातगंधसुरभिवणिग्घटं क्वचिच्च नानाविधरीतिताम्रकांस्यलोहजर्मनधातुनिर्मितानेकपात्रक्रयविक्रयकर्तॄणाम् पंक्तितया स्थितानामापणानां व्रजैर्विलसितं क्वचिच्च मुद्गमाषगोधूमचणकवल्लराजमाषकोद्रवादिनैकविधधान्यराशिविलसितप्रदेशस्थितवणिगापणानां समूहै राजमानम्, क्वचिच्चानेकविविधरंगरंजितस्त्रीपुंसपरिधानीयवस्त्रव्रातजुष्टापणपंक्तियुक्तम्, कुत्रचित् नानादेशेभ्यो धूमशकटमार्गेभ्यस्तथा जलपथेऽग्निनौकाभिरागतैर्नानादेशस्थितानेकपात्रवसनभैषज्योपनेत्रादियुक्तं तथा च छत्रदण्डादियुतम्, कंदुकक्रीडाकर्तॄणामुपयुक्तवस्तुजातम्, शालभंजिकालोहचर्मताम्रनिर्मितमंजूषादिभिर्वस्तुभिर्व्याप्तानेकहट्टम्, नानाग्रामपत्तनागतप्रतिहट्टस्थितवस्तुचिक्रीषूणां सारावियुतानां जनानां वृन्देन शोभितमिन्द्रप्रस्थनामपत्तनम्॥

यत्र नगरे निर्दयत्वं निस्त्रिंशेषु, मालिन्यं धूमेषु, वक्रिमा कामिनीकेशपाशेषु, वैचित्र्यं च प्रासादचित्रेषु, तरलता हर्म्यध्वजेषु, औद्धत्यं महिषेषु, पिशुनता मशकेषु, सेर्ष्यता यवासकेषु, न जनमनःसु चाभूत्॥ यत्र जनाः शौर्ये सेनानीसमा गांभीर्ये पारावारकल्पा धैर्ये पार्वतीपितृदेश्याः क्षमायां भूधरनिभा आस्तिक्ये श्रावकदेशीया दाने कर्णसदृशाः सौजन्ये वारिदुग्धकल्पाः सौभ्रात्रेऽश्विनीसमानाः सौन्दर्ये रतिपतितुल्या दाक्षिण्ये बृहस्पतिनिभा नीतौ चाणक्यसंनिभा गानकौशल्ये गंधर्वदेश्या अभवन्॥ यत्र जनानां पर-

क्तिविराजितानां समूहैर्व्याप्तवसुंधरावलयं नानाविधकलाधारिणां जनानां व्रातैः शोभितम्, अनेकविधशिल्पशास्त्रविधिनिर्मितानेकचैत्यदेवालयादिकं परिशीलितकाव्यनाटकभाणचंपुरसालंकारग्रंथैःसभाभूषणैर्विलोकितसांख्ययोगमीमांसान्यायादिषट्शास्त्रैः पंडितैः परिपूर्णं पाणिगृहीतकृपाणधारया विहितानेकशत्रुपराजयानां सम्राट्पदवीधारिणां क्षत्रिययवनजातिषूत्पन्नानां राज्ञां समूहेन व्याप्तं भारतमासीत् पूर्वकालेऽद्यापि भूतपूर्वराजन्यकीर्तिकौमुद्या प्रकाशितं गौरवतामादधाति सर्वदेशविषये । यत्र भारते वर्षे जैनधर्मतीर्थंकरस्य महावीरस्य प्रथमगणधरो गौतमोऽभवत् । तदनन्तरम् उमास्वातिविजयसेनसूरीश्वरादयोऽन्येप्याचार्या जैनधर्मे समभवन्। सहस्रचतुःशतीमितग्रंथनिर्माता हरिभद्रसूरीश्वरश्च जनचित्तान्धकारनिवारकोऽपरतरणिरिव श्रीसिद्धसेनदिवाकरश्चाभूत्। किंच यत्र भारते वर्षे तीव्राराधनसंतुष्टवाग्देवताप्रसादात् सिद्धहैमत्रिषष्टिशलाकाचरित्रयोगशास्त्रादिग्रन्थनिर्माता कलिकालसर्वज्ञेत्युपाधिधारी श्रीहेमचन्द्राचार्यश्चान्ये यशोविजयादिसूरीश्वरा जैनधर्मदेशनादुंदुभिनादेन सत्राऽहिंसादिपञ्चाणुव्रतस्तंभं निचख्नुः । येषां विभूतिविलसितानां तीव्रसंवेगानां सूरीश्वराणां महान् कालो व्यतीयाय परञ्च तेषां कीर्तयो जैनजैनेतरेषु धवलितदिगंतरा अद्यापि प्रतीयन्ते ॥

एतादृशे भारते वर्षेऽस्ति च मृगमदमलयजागुरुनालिकेरपूगैलालवंगतमालपत्रजातिफलहरीतकीक-

येनाकारि सहस्रवर्षमखिलं दिव्यं तपः सादरम् ॥ निर्दग्धा विषयाः समस्तजनतादुःखाकराः सर्वथा ॥
कृत्वा घातिसमग्रकर्मनशनं प्रापे परं केवलम् ॥ सोऽयं नाभितनूभवो वितनुतां नित्यं प्रभुर्मंगलम् ॥२॥
चतुर्विंशतिसंख्यायाः पूरकं पूर्णशान्तिदम् ॥ वर्धमानं जिनं वन्दे सर्वान्तःक्लेशनाशनम् ॥३॥
पूर्णिमाचन्द्रतुल्यास्ये द्युतिं शौक्लीं दधत्यलम् ॥ शारदा रसनाग्रं मे सदा तिष्ठतु याचिता ॥४॥
पन्यासपदवीं धत्ते योऽधुना मामको गुरुः ॥ वन्दे हिम्मतपूर्वं तं विमलं शिरसादरात् ॥५॥
यस्य तु चरितं सर्वं परमगुरुवर्यस्यामृतविमलस्य ॥ तनोमि गद्यबंधेन तस्य प्रशिष्यशान्तिविमलः॥६॥

चतुर्दशराजलोकमध्यस्थितभूमंडले कुंडलाकारारुणनंदीश्वरक्षोदवरघृतवरक्षीरवरवारुणीवरपुष्करकालोदधिलवणाभिधानसमुद्रैः परितो वलयाकारै र्वेष्टिताः कुंडलारुणनंदीश्वरक्षोदवरघृतवरक्षीरवरवारुणीवरपुष्करखंडधातकिखंडजंबुद्वीपनामानः खंडाः सन्ति। तत्र क्षारसमुद्रपरिवेष्टिते जंबुद्वीपेऽस्ति भारतं नाम वर्षम् ॥

यत्र भूमिस्थितविषयव्यापिकीर्तितया, अपरदेशापेक्षया विविधसलीलनिर्झरक्ष्वेदितानेकौषधिव्रजव्यापकपर्वतव्रातम्, अनेकविधनदनदीनां पयःपूरेण प्लावितकृषीवलभूमिप्रोत्पन्नानेकजातीयधान्यराशिभिर्दत्तदारिद्र्यजलाञ्जलि, शिलीमुखताराशाजिताब्जनयनैः प्रतिस्थलं क्ष्मासौंदर्यमालोकयतामिव नदनदीसरसां सोपानपं-

॥ श्रीजिनाय नमः ॥

अनुयोगाचार्य-गणिवर्य—

卐  卐

श्रीअमृतविमलजीमहाराजः

# ॥ श्रीअमृतविमलचरितम् ॥

॥ ॐ नमोऽर्हम् ॥

यन्नामनिर्मितौ वर्णास्त्रयः प्रापुः सुपूज्यताम् ॥ तं नाभिनंदनं वन्दे ऋषभाख्यमहं प्रभुम् ॥१॥

श्री अमृतहिम्मतग्रन्थमाला पुष्पं ७

पं. दयाविमलजीसद्गुरुभ्यो नमः

(३)

प्रवर्तकमुनिराजश्रीशान्तिविमलविरचितम्

# ॥ श्रीअमृतविमलचरितम् ॥

श्रीपरमपूज्यव्याख्यानवाचस्पतिवयोवृद्धदीर्घतपस्विपन्यासपदवीभृदनुयोगाचार्यहिम्मतविमलजीगणाधीशप्रशिष्य-विद्याप्रेमिमुनिराजरत्नविमलमुनिसदुपदेशतः कोशिलाववास्तव्यश्रेष्ठिहिम्मतमल्लतनुजन्मनः स्वर्गस्थललवानी-त्यवटंकश्रेष्ठिधनराजस्य द्रव्यसाहाय्येन प्राकाश्यं नीतम् ॥

विक्रमसंवत १९९५ सने १९३९

प्रथमावृत्तिः मूल्यं—सदुपयोगः प्रतयः २५०